॥ श्रीः ॥

# समयोचितपद्यमालिका

नाम

प्रासंगिकश्लोकचरणान्तःपातिश्लोकानां संग्रहः ।



गंगाधर कृष्ण द्रविड इत्येतैः

संगृहीतः ।

( पंचमावृत्तिः )



मुम्बय्यां

तुकाराम जावजी इत्यनेन स्वीये निर्णयसागराख्य-
मुद्रणालये रामचंद्र येशू शेडगेद्वारा मुद्रयित्वा
प्रकाशितः



शकाब्दाः १८३६ सन १९१४.



मूल्यं षडाणकाः



# प्रस्तावना.



या पुस्तकांत ज्या पद्यांचा संग्रह केला आहे त्यांचा उद्देश असा आहे कीं, प्रचाराचे बोलण्यांत ज्या प्रसंगीं ज्या विषयावर जें भाषण केलें जातें त्यास अनुसरून परंपरेनें चालत आलेली एखादी ह्मण संस्कृत किंवा प्राकृत ह्मणण्याची रीत आहे; त्यांत प्राकृताच्या ह्मणी बहुधा गद्यात्मक फार आहेत आणि संस्कृतांतील ह्मणी बहुधा पद्यात्मक असून प्रसंगीं ज्या चरणाचा उपयोग असतो, तितकाच पाठ असतो. उदाहरणः—बाजवीपेक्षां फाजील काम कोणी करूं लागल्यास **"अति सर्वत्र वर्जयेत्"** असें ह्मणतात. परंतु अशा प्रकारच्या चरणाचे सर्व ह्मणीचे पुरे श्लोक बहुतेकांना येत नसतात. यास्तव ज्यांच्या पाठांत जे श्लोक पुरे होते त्यांचा, व ज्या ग्रन्थांत जितके सांपडले त्यांचा संग्रह यांत केला आहे.

ह्मणीच्या अनुक्रमानें श्लोक लौकर सांपडण्यास्तव जो चरण ह्मणींत आहे त्याचे आद्याक्षराच्या वर्णानुक्रमानें या पुस्तकांत लिहिला आहे. या अनुक्रमाच्या योगानें क्वचित्स्थलीं **"क्वचित्काणो भवेत्साधुः"** आणि **"खल्वाटो निर्धनः क्वचित्"** हे दोन्ही चरण एकाच श्लोकांतील जरी आहेत, तरी निरनिराळ्या प्रसंगीं प्रत्येक चरणाचा उपयोग प्रचाराचे बोलण्यांत करितात यास्तव दोन्ही वर्णानुक्रमांत लिहिला गेला आहे.

गंगाधर कृष्ण.

श्रीः ।

# समयोचितपद्यमालिका ।



## अ

अवसरपठिता वाणी गुणगणरहितापि शोभते पुंसाम् ।
रतिसमये रमणीनां भूषाहानिस्तु भूषणं भवति ॥ १ ॥

असंतुष्टा द्विजा नष्टाः संतुष्टश्च[1] महीपतिः ।
सलज्जा गणिका नष्टा निर्लज्जा[2] च कुलाङ्गना ॥ २ ॥

अनभ्यासे विषं शास्त्रं अजीर्णे भोजनं विषम् ।
मूर्खस्य[3] च विषं गोष्ठी वृद्धस्य तरुणी विषम् ॥ ३ ॥

न च पश्यति जन्मान्धः कामान्धो नैव पश्यति ।
न पश्यति मदोन्मत्तो ह्यर्थी दोषान्न पश्यति ॥ ४ ॥

अतिरूपाद्धृता सीताऽतिगर्वाद्रावणो हतः ।
अतिदानाद्बलिर्बद्धश्चाति सर्वत्र वर्जयेत् ॥ ५ ॥

अतिपरिचयादवज्ञा संततगमनादनादरो भवति ।
मलये भिल्लपुरंध्री चन्दनतरुकाष्ठमिन्धनं कुरुते ॥ ६ ॥

लुलाये गोमायौ मृगपरिषदि श्वापदकुले
करिष्यन् कार्पण्यं किमिह महिमानं गमयसि ।
निमग्नः पङ्केऽस्मिन्ननुभव करीन्द्राधिपदशां
अभद्रं भद्रं वा विधिलिखितमुन्मूलयति कः ॥ ७ ॥

क्षमाखड्गः करे यस्य दुर्जनः किं करिष्यति ।
अतृणे पतितो वह्निः स्वयमेवोपशाम्यति ॥ ८ ॥

अमृतं शिशिरे वह्निरमृतं प्रियदर्शनम् ।
अमृतं राजसन्मानममृतं क्षीरभोजनम् ॥ ९ ॥

---

१ 'संतुष्टाश्चैव पार्थिवाः'. २ 'निर्लज्जेव कुलाङ्गना'. ३ 'विषं सभा दरिद्रस्य'.

अमृतं शिशिरे वह्निरमृतं बालभाषणम् ।
अमृतं स्त्रीप्रियाभार्या ह्यमृतं स्वामिगौरवम् ॥ १० ॥
अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् ।
इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैः ॥ ११ ॥
अयुक्तं स्वामिनो युक्तं युक्तं नीचस्य दूषणम् ।
अमृतं राहवे मृत्युर्विषं शंकरभूषणम् ॥ १२ ॥
अश्वं नैव गजं नैव व्याघ्रं नैव च नैव च ।
अजापुत्रं बलिं दद्याद्देवो दुर्बलघातकः ॥ १३ ॥
अज्ञानेनावृतो लोकस्तमसा न प्रकाशते ।
लोभात्त्यजति मित्राणि सङ्गात्स्वर्गं न गच्छति ॥ १४ ॥
असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ १५ ॥
अपुत्रस्य गृहं शून्यं दिशः शून्यास्त्वबान्धवाः ।
मूर्खस्य हृदयं शून्यं सर्वशून्या दरिद्रता ॥ १६ ॥
अपुत्रस्य गतिर्नास्ति स्वर्गो नैव च नैव च ।
तस्मात्पुत्रमुखं दृष्ट्वा पश्चाद्भवति तापसः ॥ १७ ॥
क्षणे तुष्टाः क्षणे रुष्टास्तुष्टा रुष्टाः क्षणे क्षणे ।
अव्यवस्थितचित्तानां प्रसादोऽपि भयंकरः ॥ १८ ॥
व्यवस्थितः प्रशान्तात्मा कुपितोऽप्यभयंकरः ।
अव्यवस्थितचित्तस्य प्रसादोऽपि भयंकरः ॥ १९ ॥
अभिमानधनं येषां चिरं जीवन्ति ते नराः ।
अभिमानविहीनानां किं धनेन किमायुषा ॥ २० ॥
उष्ट्राणां च विवाहेषु गीतं गायन्ति गर्दभाः ।
परस्परं प्रशंसन्ति अहो रूपमहो ध्वनिः ॥ २१ ॥
अमितगुणोऽपि पदार्थो दोषेणैकेन निन्दितो भवति ।
निखिलरसायनमहितो गन्धेनोग्रेण लशुन इव ॥ २२ ॥
अध्वा जरा मनुष्याणां अनध्वा वाजिनां जरा ।
असंभोगो जरा स्त्रीणां वस्त्राणामातपो जरा ॥ २३ ॥

---

१ 'राजसंमानं'. २ 'उष्ट्राणां च गृहे लग्नं गर्दभाः शान्तिपाठकाः'.

असिजीवी मषीजीवी देवलो ग्रामयाजकः।
धावकः पाचकश्चैव षडेते ब्राह्मणाधमाः ॥ २४ ॥
अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ २५ ॥
अत्यन्तमतिमेधावी त्रयाणामेकमश्नुते।
अल्पायुषो दरिद्रो वा ह्यनपत्यो न संशयः ॥ २६ ॥
प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ २७ ॥
दीपनष्टं हरिभ्रष्टं (?) स्थानभ्रष्टं च माधवम्।
अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥ २८ ॥
अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत्।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ २९ ॥
जन्मप्रभृति दारिद्र्यं दशवर्षाणि बन्धनम्।
समुद्रतीरे मरणमन्यत्किंचिद्भविष्यति ॥ ३० ॥
अनारम्भो मनुष्याणां प्रथमं बुद्धिलक्षणम्।
आरब्धस्यान्तगमनं द्वितीयं बुद्धिलक्षणम् ॥ ३१ ॥
प्रजा न रञ्जयेद्यस्तु राजा रक्षादिभिर्गुणैः।
अजागलस्तनस्येव तस्य जन्म निरर्थकम् ॥ ३२ ॥
धर्मार्थकाममोक्षाणां यस्यैकोऽपि न विद्यते।
अजागलस्तनस्येव तस्य जन्म निरर्थकम् ॥ ३३ ॥
अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम्।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ३४ ॥
एकं दृष्ट्वा शतं दृष्ट्वा दृष्ट्वा पञ्चशतान्यपि।
अतिलोभो न कर्तव्यश्चक्रं भ्रमति मस्तके ॥ ३५ ॥
अक्षौरेऽपि च नक्षत्रे कुर्वीत बुधसोमयोः।
युक्तोऽपि तिथिनक्षत्रे न कुर्याच्छनिभौमयोः ॥ ३६ ॥

---

१ ग्रामजोशी. २ जासूद. ३ आचारी. ४ 'पुत्रजीवनकामस्तु नेन्दौ क्षौरं समाचरेत्'। 'निषिद्धेऽपि दिने क्षौरं कुर्याद्वै बुधशुक्रयोः'. ५ तिथिनक्षत्रे.

**अजरामरवत्प्राज्ञो विद्यामर्थं च साधयेत् ।**
गृहीत इव केशेषु मृत्युना धर्ममाचरेत् ॥ ३७ ॥

यस्य[1] किंचिन्न दातव्यं तस्य देयं किमुत्तरम् ।
**अद्य सायं पुनः प्रातः सायं प्रातः पुनः पुनः** ॥ ३८ ॥

इतरपापफलानि यथेच्छया
विलिखितानि सहे चतुरानन ।
**अरसिकेषु कवित्वनिवेदनं**
**शिरसि मा लिख मा लिख मा लिख** ॥ ३९ ॥

**अधना धनमिच्छन्ति** वाचं चैव चतुष्पदः ।
मानवाः स्वर्गमिच्छन्ति मोक्षमिच्छन्ति देवताः ॥ ४० ॥

अद्यापि नोज्झति हरः किल कालकूटं
कूर्मो बिभर्ति धरणीं खलु पृष्ठभागे ।
अम्भोनिधिर्वहति दुस्तरवाडवाग्निं
**अङ्गीकृतं सुकृतिनः परिपालयन्ति** ॥ ४१ ॥

शास्त्रं सुचिन्तितमथो परिचिन्तनीय-
माराधितोऽपि नृपतिः परिसेवनीयः[2] ।
**अङ्के धृतापि तरुणी परिरक्षणीया**
शास्त्रे नृपे च युवतौ च कुतो वशित्वम् ॥ ४२ ॥

**अर्थानर्थान्तरे बुद्धिर्निश्चितापि न शोभते ।**
घातयन्ति हि कार्याणि दूताः पण्डितमानिनः ॥ ४३ ॥

यूयमेवास्य जानीत यो यं यद्वा करिष्यति ।
**अहिरेव त्वहेः पादान्विजानाति न संशयः** ॥ ४४ ॥

**असहायः पुमानेकः कार्यान्तं नाधिगच्छति ।**
तुषेणापि विनिर्मुक्तस्तण्डुलो न प्ररोहति ॥ ४५ ॥

विश्वासप्रतिपन्नानां वञ्चने का विचित्रता ।
**अङ्कमारुह्य सुप्तं हि हत्वा किं नाम पौरुषम्** ॥ ४६ ॥

---

१ 'यस्य कार्यं न कर्तव्यं तस्य देयं किमुत्तरम्'. २ 'शङ्कनीयः'.

**अङ्गं गलितं पलितं मुण्डं** दशनविहीनं जातं तुण्डम् ।
वृद्धो याति गृहीत्वा दण्डं तदपि न मुञ्चत्याशापिण्डम् ॥ ४७ ॥
अङ्केषु शून्यविन्यासाद्वृद्धिः स्यात्तु दशाधिका ।
तस्माज्ज्ञेया विशेषेण **अङ्कानां वामतो गतिः** ॥ ४८ ॥
त्रिभिर्वर्षैस्त्रिभिर्मासैस्त्रिभिः पक्षैस्त्रिभिर्दिनैः ।
**अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते** ॥ ४९ ॥
लेखनी सर्ववर्णेषु विधिना निर्मिता पुरा ।
नवाङ्गुलप्रमाणेन **अधिकस्याधिकं फलम्** ॥ ५० ॥
**असारे खलु संसारे सुखभ्रान्तिः शरीरिणाम्** ।
लालापानमिवाङ्गुष्ठे बालानां स्तन्यविभ्रमः ॥ ५१ ॥
**अच्युतानन्तगोविन्द**नामोच्चारणभेषजात् ।
नश्यन्ति सकला रोगाः सत्यं सत्यं वदाम्यहम् ॥ ५२ ॥
**असङ्गसङ्गदोषेण सत्याश्च मतिविभ्रमः** ।
एकरात्रप्रसङ्गेन काष्ठघण्टाविटम्बना ॥ ५३ ॥
**अत्यम्बुपानान्न विपच्यतेऽन्न**मनम्बुपानाच्च स एव दोषः ।
तस्मान्नरो वह्निविवर्धनार्थं मुहुर्मुहुर्वारि पिबेदभूरि ॥ ५४ ॥
**अनेन** तव पुत्रस्य **प्रसुप्तस्य** वनान्तरे ।
**शि**खामाक्रम्य हस्तेन **खड्गे**नोपहतं शिरः ॥ ५५ ॥
**दिवा निरीक्ष्य वक्तव्यं रात्रौ नैव च नैव च** ।
संचरन्ति हि भूतानि वटे वररुचिर्यथा ॥ ५६ ॥
**अन्नं नास्त्युदकं नास्ति** नास्ति ताम्बूलचर्वणम् ।
मन्दिरेषु महोत्साहः शुष्कचर्मस्य ताडनम् ॥ ५७ ॥
विद्यारम्भे गुरुः श्रेष्ठः मध्यमौ भृगुभास्करौ ।
कनिष्ठौ भौमसौरी च **अविद्या बुधसोमयोः** ॥ ५८ ॥
**अजीर्णे भेषजं वारि** जीर्णे वारि बलप्रदम् ।
अमृतं भोजनार्धे तु भुक्तस्योपरि तद्विषम् ॥ ५९ ॥
सस्यानि स्वयमत्ति चेद्वसुमती माता सुतं हन्ति चे-
द्वेलामम्बुनिधिर्विलङ्घयति चेद्भूमिं दहेत्पावकः ।
आकाशं जनमस्तके पतति चेदन्नं विषं चेद्भवेत्
**अन्यायं कुरुते यदा क्षितिपतिः कस्तं निरोद्धुं क्षमः** ॥६०॥

तुष्टो हि राजा यदि सेवकेभ्यो
भाग्यात्परं नैव ददाति किंचित्।
**अहर्निशं वर्षति वारिवाह-**
**स्तथापि पत्रत्रितयः पलाशः** ॥ ६१ ॥

**अबला यत्र प्रबला** बालो राजा निरक्षरो मन्त्री ।
नहि नहि तत्र धनाशा जीवितवाशापि दुर्लभा भवति ॥ ६२ ॥

**अधोधः पश्यतः कस्य महिमा नोपचीयते ।**
उपर्युपरि पश्यन्तः सर्व एव दरिद्रति ॥ ६३ ॥

सुलभाः पुरुषा राजन्सततं प्रियवादिनः ।
**अप्रियस्य च पथ्यस्य श्रोता वक्ता च दुर्लभः** ॥ ६४ ॥

**अप्रियस्यापि पथ्यस्य परिणामः सुखावहः ।**
वक्ता श्रोता च यत्रास्ति रमन्ते तत्र संपदः ॥ ६५ ॥

**अजागलस्थस्तन उष्ट्रपुच्छं** कक्षान्तरे केशमथाण्डयुग्मम् ।
त्वं संसृजन्सायणमायणादौ ब्रह्माग्रगण्यो न बभूव पूज्यः ॥ ६६ ॥

अल्पतोयश्चलत्कुम्भो अल्पदुग्धाश्च धेनवः ।
**अल्पविद्या महागर्वी** कुरूपी बहुचेष्टितः ॥ ६७ ॥

मृत्युर्जन्मवतां वीर देहेन सह जायते ।
**अद्य वाऽब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः** ॥ ६८ ॥

दर्शनं स्पर्शनं क्रीडा शृङ्गारो गुह्यभाषणम् ।
मृष्टान्नं प्रियमेकत्र शयनं भार्यया सह ।
निर्विकारं मनः कुर्यात् **असिधाराव्रतं त्विदम्** ॥ ६९ ॥

**अन्यः करोति व्यापारं लिप्तो भवति लेखकः ।**
भगलिङ्गप्रसङ्गेन छिन्ना भवति नासिका ॥ ७० ॥

नृपतेः प्रतिषिद्धमेव तत्कृतवान्पङ्क्तिरथो विलङ्घ्य यत् ।
**अपथे पदमर्पयन्ति हि श्रुतवन्तोऽपि रजोनिमीलिताः** ७१

न स्वल्पमप्यध्यवसायभीरोः
करोति विज्ञाननिधिर्गुणं हि ।
**अन्धस्य किं हस्ततलस्थितोऽपि**
**प्रकाशयत्यर्थमिह प्रदीपः** ॥ ७२ ॥

यावन्न तपति भानुस्तादृक् संतपति वालुकानिकरः ।
अन्यस्माल्लब्धपदः प्रायो नीचोऽपि दुःसहस्तप्तः ॥ ७३ ॥
लोकप्रवादः सत्योऽयं पण्डितैः समुदाहृतः ।
अकाले दुर्लभो मृत्युः स्त्रियो वा पुरुषस्य वा ॥ ७४ ॥
शुकवद्भाषणं कुर्याद्बकवद्ध्यानमाचरेत् ।
अजवच्चर्वणं कुर्याद्गजवत्स्नानमाचरेत् ॥ ७५ ॥
अजवच्चर्वणं कुर्याद्गजवत्स्नानमाचरेत् ।
राजवत्प्रविशेद्ग्रामं चोरवद्गमनं चरेत् ॥ ७६ ॥
अक्षराणि समानानि वर्तुलानि घनानि च ।
परस्परविलग्नानि तरुणीकुचकुम्भवत् ॥ ७७ ॥
अर्चकस्य प्रभावेन शिला भवति शंकरः ।
आभिरूप्याच्च मूर्तीनां देवः सान्निध्यमृच्छति ॥ ७८ ॥
उत्तमेनोत्तमं सर्वं मनुष्याणां प्रयत्नतः ।
अदृष्टमीक्ष्य सर्वेषां वक्तव्यं सुविचक्षणैः ॥ ७९ ॥
अयं पटो मे पितुराद्यभूषणः पितामहाद्यैरपि भुक्तयौवनः ।
मत्पुत्रपौत्रान्समलंकरिष्यत्यतो मया कक्षपुटेन धार्यते ॥ ८० ॥
अक्षराणि परीक्ष्यन्तामम्बराडम्बरेण किम् ।
शम्भुरम्बरहीनोऽपि सर्वज्ञः किं न जायते ॥ ८१ ॥

## आ

आरोग्यं भास्करादिच्छेत् श्रियमिच्छेद्धुताशनात् ।
ज्ञानं महेश्वरादिच्छेन्मोक्षमिच्छेज्जनार्दनात् ॥ १ ॥
आत्मा रक्ष्यः प्रयत्नेन युद्धसिद्धिर्हि चञ्चला ।
ते स्वामिवचनं सर्वे प्रतिगृह्य महौजसः ॥ २ ॥
त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ ३ ॥

---

१ 'त्वरन्भोजी चिरं स्नायी तेन मे रावणः प्रियः'. २ 'अर्चकस्य तपोयोगात्'. 'अर्चनस्यातिशायनात्';

**आत्मानं सततं रक्षेद्दारैरपि धनैरपि ।**
पुनर्दाराः पुनर्वित्तं न शरीरं पुनःपुनः ॥ ४ ॥
**आपदर्थे धनं रक्षेत्** दारान्रक्षेद्धनैरपि ।
**आत्मानं सततं रक्षेद्दारैरपि धनैरपि** ॥ ५ ॥
**आपदर्थे धनं रक्षेत्** श्रीमतामापदः कुतः ।
सा चेदपगता लक्ष्मीः संचितार्थोऽपि नश्यति ॥ ६ ॥
उद्योगः कलहः कण्डूर्द्यूतं मद्यं परस्त्रियः ।
**आहारो मैथुनं निद्रा सेवनात्तु विवर्धते** ॥ ७ ॥
धनधान्यप्रयोगेषु विद्यासंग्रहणेषु च ।
**आहारे व्यवहारे च त्यक्तलज्जः सुखी भवेत्** ॥ ८ ॥
**आचारः प्रथमो धर्मो** नृणां श्रेयस्करो महान् ।
इहलोके परा कीर्तिः परत्र परमं सुखम् ॥ ९ ॥
सर्वागमानामाचारः प्रथमं परिकल्पते ।
**आचारः प्रथमो धर्मो** धर्मस्य प्रभुरच्युतः ॥ १० ॥
मातृवत्परदारांश्च परद्रव्याणि लोष्टवत् ।
**आत्मवत्सर्वभूतानि** यः पश्यति स पश्यति[1] ॥ ११ ॥
अर्जुनस्य प्रतिज्ञे द्वे न दैन्यं न पलायनम् ।
आयू रक्षति मर्माणि **आयुरन्नं प्रयच्छति** ॥ १२ ॥
निमग्नस्य पयोराशौ पर्वतात्पतितस्य च ।
तक्षकेणापि दष्टस्य **आयुर्मर्माणि रक्षति** ॥ १३ ॥
विषये[2] नवगर्भे च ऋणे कुक्कुरसंगमे ।
**आगमे सुखमाप्नोति निर्गमे प्राणसंकटम्** ॥ १४ ॥
नमस्कारसहस्रेषु शाकपत्रं न लभ्यते ।
**आशीर्वादसहस्रेषु रोमवृद्धिर्न जायते** ॥ १५ ॥
उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ।
**आत्मैव ह्यात्मनो बन्धुरात्मैव**रिपुरात्मनः ॥ १६ ॥
सन्नामिव महाकीर्तिं श्रद्धामिव विमानिताम् ।
प्रज्ञामिव परिक्षीणां **आशां प्रतिहतामिव** ॥ १७ ॥

---

१ 'पण्डितः'. २ 'अधिकारं च गर्भं च ऋणं च श्वानमैथुनम्'.

तां स्मृतीमिव संदिग्धां ऋद्धिं निपतितामिव ।
विहतामिव च श्रद्धां **आशां प्रतिहतामिव** ॥ १८ ॥
आयातीमिव विध्वस्तां **आज्ञां प्रतिहतामिव** ।
दीप्तामिव दिशं काले पूजामपहतामिव ॥ १९ ॥
**आहारनिद्राभयमैथुनानि समानमेतत्पशुभिर्नराणाम्** ।
एको विवेको ह्यधिको मनुष्ये तेनैव हीनः पशुभिः समानः ॥ २० ॥
**आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च** ।
नेत्रवक्त्रविकारैश्च गृह्यतेऽन्तर्गतं मनः ॥ २१ ॥
**आकारेणैव चतुरास्तर्कयन्ति परेङ्गितम्** ।
गर्भस्थं केतकीपुष्पमामोदेनैव षट्पदाः ॥ २२ ॥
वृद्धार्कः प्रेतधूम्रश्च वृद्धा स्त्री थिल्लरोदकम् ।
**आयुष्यनाशकं नित्यं रात्रौ दध्यन्नभोजनम्** ॥ २३ ॥
बालार्को यज्ञधूम्रश्च बाला स्त्री निर्झरोदकम् ।
**आयुष्यवर्धकं नित्यं रात्रौ क्षीरान्नभोजनम्** ॥ २४ ॥
**आचारः परमो धर्म** आचारः परमं तपः ।
आचारः परमं ज्ञानमाचारात्किं न साध्यते ॥ २५ ॥
**आदावायुः परीक्षेत** पश्चाल्लक्षणमुत्तमम् ।
आयुर्हीननराणां च लक्षणैः किं प्रयोजनम् ॥ २६ ॥
आशाया ये दासास्ते दासाः सर्वलोकस्य ।
**आशा येषां दासी तेषां दासायते लोकः** ॥ २७ ॥
उद्यमः कलहः कण्डूर्द्यूतं मद्यं वरस्त्रियः ।
**आहारो मैथुनं निद्रा सेव्यमानं विवर्धते** ॥ २८ ॥
इदमेव हि पाण्डित्यं चातुर्यमिदमेव हि ।
इदमेव सुबुद्धित्वं **आयादल्पतरो व्ययः** ॥ २९ ॥
न कूपखननं युक्तं प्रदीप्ते वह्निना गृहे ।
चिन्तनीया हि विपदां **आदावेव प्रतिक्रिया** ॥ ३० ॥

---

१ आहारनिद्राभयमैथुनानि चत्वारि चिह्नानि वसन्ति देहे । ज्ञानं नराणामधिकं हि लोके ज्ञानेन हीनः पशुभिः समानः.

अन्तःकरणतत्त्वस्य दंपत्योः स्नेहसंश्रयात् ।
**आनन्दग्रन्थिरेकोयमपत्यमिति कथ्यते** ॥ ३१ ॥

## इ

**इदमेव हि पाण्डित्यं** चातुर्यमिदमेव हि ।
इदमेव सुबुद्धित्वं आयादल्पतरो व्ययः ॥ १ ॥
**इतो भ्रष्टस्ततो भ्रष्टः** परमेकान्तिवेषभाक् ।
न संसारसुखं तस्य नैव मुक्तिसुखं भवेत् ॥ २ ॥
सत्कुले योजयेत्कन्यां पुत्रं विद्यासु योजयेत् ।
व्यसने योजयेच्छत्रुं **इष्टं धर्मेण योजयेत्** ॥ ३ ॥
उत्तमं प्रणिपातेन शूरं भेदेन योजयेत् ।
नीचमल्पप्रदानेन **इष्टं धर्मेण योजयेत्** ॥ ४ ॥

## ई

**ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।**
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥ १ ॥

## उ

**उद्योगः खलु कर्तव्यः** फलं मार्जारवद्भवेत् ।
जन्मप्रभृति गौर्नास्ति पयः पिबति नित्यशः ॥ १ ॥
अश्वस्य लक्षणं वेगो मदो मातङ्गलक्षणम् ।
चातुर्यं लक्षणं नार्या **उद्योगः पुरुषलक्षणम्** ॥ २ ॥
तिथ्यन्ते वाथ भान्ते वा **उत्सवान्ते च पारणम्** ।
कुर्यात्कृष्णार्चनान्ते वा न कुर्यान्निशि पारणम् ॥ ३ ॥
अयं निजः परो वेति गणना लघुचेतसाम् ।
**उदारचरितानां तु वसुधैव कुटुम्बकम्** ॥ ४ ॥
**उत्तमा आत्मना ख्याताः** पित्रा ख्याताश्च मध्यमाः ।
मातुलेनाधमाः ख्याताः श्वशुरेणाधमाधमाः ॥ ५ ॥
**उत्पद्यन्ते विलीयन्ते दरिद्राणां मनोरथाः ।**
बाल्ये वैधव्यदग्धानां कुलस्त्रीणां कुचाविव ॥ ६ ॥
**उत्तमे तु क्षणं कोपो** मध्यमे घटिकाद्वयम् ।
अधमे स्यादहोरात्रं चाण्डाले मरणान्तिकः ॥ ७ ॥

जटिलो मुण्डी लुञ्चितकेशः काषायाम्बरबहुकृतवेषः ।
पश्यन्नपि च न पश्यति मूढ **उदरनिमित्तं बहुकृतवेषः** ॥ ८ ॥
सर्वाः[1] संपत्तयस्तस्य संतुष्टं यस्य मानसम् ।
**उपानद्गूढपादस्य ननु चर्मावृतेव भूः** ॥ ९ ॥
कार्यार्थी भजते लोके यावत्कार्यं न सिध्यति ।
**उत्तीर्णे च परे पारे नौकायाः किं प्रयोजनम्** ॥ १० ॥
नाटके भवभूतिर्वा वयं वा वयमेव वा ।
**उत्तरे रामचरिते भवभूतिर्विशेषतः** ॥ ११ ॥
दुर्जनस्य विशिष्टत्वं परोपद्रवकारणम् ।
**उपोषितस्य व्याघ्रस्य पारणं पशुमारणम्** ॥ १२ ॥
उभौ शुक्लौ पक्षौ भुवि वियति चावारितगतिः
सदा मीनं भुङ्क्ते वसति सकलस्थाणुशिरसि ।
बके सर्वश्चान्द्रो विलसति गुणः किंचिदधिको
**गुणाः स्थाने पूज्या नरवर न तु स्थानविकलाः** ॥ १३ ॥
नौकां वै भजते तावद्यावत्पारं न गच्छति ।
**उत्तीर्णे तु परे पारे नौकायाः किं प्रयोजनम्** ॥ १४ ॥
**उद्योगे नास्ति दारिद्र्यं** जपतो नास्ति पातकम् ।
मौनिनः कलहो नास्ति न भयं चास्ति जाग्रतः ॥ १५ ॥
**उच्छिष्टं शिवनिर्माल्यं** वमनं शवकर्पटः ।
काकविष्ठासमुत्पन्नाः पञ्चैतेऽतिपवित्रकाः ॥ १६ ॥
**उत्फुल्लगल्लैरालापाः** क्रियन्ते दुर्मुखैः सुखम् ।
जानाति हि पुनः सम्यक् कविरेव कवेः श्रमम् ॥ १७ ॥

ऊ

कार्पासं कटिनिर्मुक्तं[2] कौशेयं भोजनावधि ।
ऊर्णवस्त्रं[3] सदा शुद्धं[4] **ऊर्णा वातेन शुध्यति** ॥ १ ॥

१ 'पूर्णे मनसि संपूर्णं जगत्सर्वं सुधाद्रवैः'. २ 'भोजने घृतम्'. ३ 'प्रक्षालनेन शुध्येत'. ४ 'रेतःस्पर्शाच्छवस्पर्शात्स्पर्शान्मूत्रपुरीषयोः । रजस्वलादिसंस्पर्शादूर्णावातान्न शुध्यति ॥ त्वक्फलोदररोमाणि भवन्ति वस्त्रजातयः । प्रोक्षणात् क्षालनात् वातात् झटितेन विशुध्यति'.

## ऋ

अपात्रे पात्रताबुद्धिः पात्रे बुद्धिरपात्रता ।
**ऋणानुबन्धरूपेण दातुरुत्पद्यते मतिः** ॥ १ ॥

## ए

**एकाक्षरप्रदातारं यो गुरुं नाभिवन्दति ।**
श्वानयोनिशतं भुक्त्वा चाण्डालेष्वभिजायते ॥ १ ॥
**एकमेवाक्षरं यस्तु गुरुः शिष्यं प्रबोधयेत् ।**
पृथिव्यां नास्ति तद्द्रव्यं यद्दत्वा चानृणी भवेत् ॥ २ ॥
**एकस्तपो द्विरध्यायी** त्रिधा गानं चतुष्पथः ।
पञ्चसप्त कृषिश्चैव संग्रामं बहुभिर्जनैः ॥ ३ ॥
**एकः पथा न गन्तव्यं** न सुप्ति बाह्यमन्दिरे ।
जनवाक्यं तु कर्तव्यं स्त्रीणामालोचनं विना ॥ ४ ॥
सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् ।
नासत्यं च प्रियं ब्रूयात् **एष धर्मः सनातनः** ॥ ५ ॥
स त्वां राम हते युक्तं प्रत्यर्चयति सागरः ।
कृते च प्रतिकर्तव्यं **एष धर्मः सनातनः** ॥ ६ ॥

**एको देवः केशवो वा शिवो वा**
एका नारी सुन्दरी वा दरी वा ।
एकं मित्रं भूपतिर्वा यतिर्वा
एको वासः पत्तने वा वने वा ॥ ७ ॥

एको बटुर्दर्भकुशाग्रपाणि-
र्वने वनैः सिंचति बालचूतान् ।
आम्राश्च सिक्ताः पितरश्च तृप्ता
**एका क्रिया द्व्यर्थकरी प्रसिद्धा** ॥ ८ ॥

व्यालाश्रितापि विफलापि सकण्टकापि
वक्रापि पङ्किलभवापि दुरासदापि ।
गन्धेन बन्धुरसि केतकि सर्वजन्तोः
**एको गुणः खलु निहन्ति समस्तदोषान्** ॥ ९ ॥

यत्र विद्वज्जनो नास्ति श्लाघ्यस्तत्राल्पधीरपि ।
निरस्तपादपे देशे **एरण्डोऽपि द्रुमायते** ॥ १० ॥
कल्याणी वत गाथेयं लौकिकी प्रतिभाति माम् ।
**एति जीवन्तमानन्दो नरं वर्षशतादपि** ॥ ११ ॥
यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।
**एकं सांख्यं च योगं च यः पश्यति स पश्यति** ॥ १२ ॥
**एकोऽपि गुणवान्पुत्रो निर्गुणैः किं शतेन तैः ।**
एकश्चन्द्रो जगच्चक्षुर्नक्षत्रैः किं प्रयोजनम् ॥ १३ ॥
**एक एव न भुञ्जीयात्** यदीच्छेच्छुभमात्मनः ।
द्वित्रिभिर्वहुभिः सार्धं भोजनं कारयेन्नरः ॥ १४ ॥
**एकः स्वादु न भुञ्जीत** नैकः सुप्तेषु जागृयात् ।
**एको न गच्छेदध्वानं** नैकश्चार्थान्प्रचिन्तयेत् ॥ १५ ॥
**एकः पापानि कुरुते फलं भुङ्क्ते महाजनः ।**
भोक्तारो विप्रमुच्यन्ते कर्ता दोषेण लिप्यते ॥ १६ ॥
**[1]एकादशस्थे गोविन्दे सर्वेऽप्येकादशे स्थिताः ।**
किं[2] कुर्वन्ति ग्रहाः सर्वे शनिरङ्गारको गुरुः ॥ १७ ॥

## औ

शरीरे जर्जरीभूते व्याधिग्रस्ते कलेवरे ।
**औषधं जाह्नवीतोयं वैद्यो नारायणो हरिः** ॥ १ ॥

## क

तर्कभाषा मुखे यस्य करस्था यस्य मञ्जरी ।
**कण्ठे मुक्तावली यस्य तस्य वश्या मनोरमा** ॥ १ ॥
हीनसेवा न कर्तव्या **कर्तव्यो महदाश्रयः ।**
पयोऽपि शौण्डिनीहस्ते वारुणीत्यभिधीयते ॥ २ ॥
शिरसा धार्यमाणोऽपि सोमः सोमेन शंभुना ।
तथापि कृशतां धत्ते **कष्टः खलु पराश्रयः** ॥ ३ ॥

१ ('एकादशस्थे गोविन्दे मुकुन्दे श्रीनिकेतने'). २ किं कुर्वन्ति ग्रहाः सर्वे शन्यर्काङ्गारकादयः'.

कष्टं खलु मूर्खत्वं **कष्टं खलु यौवनेषु दारिद्र्यम्** ।
कष्टात्कष्टतरं किं परगृहवासः परान्नं च ॥ ४ ॥

**कर्मणो ह्यपि बोद्धव्यं** बोद्धव्यं च विकर्मणः ।
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ ५ ॥

विपत्तौ किं विषादेन संपत्तौ हर्षणेन किम् ।
भवितव्यं भवत्येव **कर्मणो गहना गतिः** ॥ ६ ॥

**कलहान्तानि हर्म्याणि** कुवाक्यान्तं च सौहृदम् ।
कुराजान्तानि राष्ट्राणि कुकर्मान्तं यशो नृणाम् ॥ ७ ॥

कस्य दोषः कुले नास्ति व्याधिना को न पीडितः ।
व्यसनं केन न प्राप्तं **कस्य सौख्यं निरन्तरम्** ॥ ८ ॥

को हि भारः समर्थानां किं दूरं व्यवसायिनाम् ।
को विदेशः सुविद्यानां **कः परः प्रियवादिनाम्** ॥ ९ ॥

**कर्मणैव हि संसिद्धि**मास्थिता जनकादयः ।
लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि ॥ १० ॥

**कस्त्वं कोऽहं कुत आयातः का मे जननी को मे तातः** ।
इति परिभावय सर्वमसारं सर्वं त्यक्त्वा स्वप्नविचारम् ॥ ११ ॥

अनित्यानि शरीराणि विभवो नैव शाश्वतः ।
नित्यं संनिहितो मृत्युः **कर्तव्यो धर्मसंग्रहः** ॥ १२ ॥

लावकश्च वराहश्च महिषी कुञ्जरस्तथा ।
**कर्ता कारयिता चैव** षडेते समभागिनः ॥ १३ ॥

**कर्ता कारयिता चैव** प्रेषको ह्यनुमोदकः ।
सुकृतं दुष्कृतं चैव चत्वारः समभागिनः ॥ १४ ॥

कृते च रेणुका कृत्या त्रेतायां जानकी तथा ।
द्वापरे द्रौपदी कृत्या **कलौ कृत्या गृहे गृहे** ॥ १५ ॥

**कर्तुमकर्तुं शक्तः सकलं जगदेतदन्यथाकर्तुम्** ।
यस्तं विहाय रामं कामं मा धेहि मानसान्यस्मिन् ॥ १६ ॥

कृते तु मानवा धर्मास्त्रेतायां गौतमाः स्मृताः ।
द्वापरे शङ्खलिखितौ **कलौ पाराशरस्मृतिः** ॥ १७ ॥

कविः करोति काव्यानि रसं जानन्ति पण्डिताः ।
कन्यासुरतचातुर्यं जामाता वेत्ति नो पिता ॥ १८ ॥
वागुच्चारोत्सवं मात्रं तत्क्रियां कर्तुमक्षमाः ।
कलौ वेदान्तिनो भान्ति फाल्गुने बालका इव ॥ १९ ॥
सुरतं तदेव सुरतं यत्नाल्लब्धं यदन्यनारीषु ।
सन्तत्यै दाररतिः कण्डूशमनाय चेटिकागमनम् ॥ २० ॥

---

## श्रीमद्भागवतस्कन्धः १.

### अध्यायः ३.

अवतारा ह्यसंख्येया हरेः सत्त्वनिधेर्द्विजाः ।
यथा विदासिनः कुल्याः शतशः स्युः सहस्रशः ॥ २१ ॥
ऋषयो मनवो देवा मनुपुत्रा महौजसः ।
कलाः सर्वे हरेरेव सप्रजापतयस्तथा ॥ २२ ॥
एते चांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम् ।
इन्द्रारिव्याकुलं लोकं मृडयन्ति युगेयुगे ॥ २३ ॥
वनजौ वनजौ खर्वः रामो कृष्णः कृपोऽकृपः ।
अवतारा दशैते स्युः कृष्णस्तु भगवान्स्वयम् ॥ २४ ॥
अभुक्त्वामलकं पथ्यं भुक्त्वा तु बदरीफलम् ।
कपित्थं सर्वदा पथ्यं कदली न कदाचन ॥ २५ ॥
क्वचिद्दन्तालको मूर्खः क्वचिद्ज्ञानवती सती ।
क्वचित्काणो भवेत्साधुः खल्वाटो निर्धनः क्वचित् ॥ २६ ॥
तमालं त्रिविधं प्रोक्तं कलौ भागीरथी यथा ।
क्वचिद्भुक्ता क्वचित्थुक्ता क्वचिन्नासाग्रगामिनी ॥ २७ ॥
[3]द्रव्याणि भूमौ पशवश्च गोष्ठे भार्या गृहद्वारि जनः श्मशाने ।
देहश्चितायां परलोकमार्गे कर्मानुगो गच्छति जीव एकः ॥२८॥

---

१ 'कवितारसचातुर्यं रसज्ञो वेत्ति नो कविः'. २ 'कुशलाः शब्दवार्तायां वृत्तिहीनाः सुरागिणः'. ३ 'दाराः पुत्रेषु रताः पुत्राः पितृधनपरिग्रहव्यग्राः। जननी रोदनशरणा परलोकगतस्य को बन्धुः ॥'.

**क्षणशः कणशश्चैव विद्यामर्थं च साधयेत् ।**
क्षणत्यागे कुतो विद्या कणत्यागे कुतो धनम् ॥ २९ ॥

स त्वां राम हिते युक्तं प्रत्यर्चयति सागरः ।
**कृते च प्रतिकर्तव्यमेष धर्मः सनातनः** ॥ ३० ॥

पथि च्युतं तिष्ठति दिष्टरक्षितं गृहे[1] स्थितं दैवहतं विनश्यति ।
जीवत्यनाथोऽपि वने विसर्जितः **कृतप्रयत्नोऽपि गृहे न जीवति** ३१

इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ ।
एतद्बुध्वा बुद्धिमान्स्यात् **कृतकृत्यश्च भारत** ॥ ३२ ॥

त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत् ।
द्वापरे कुलमेकं तु **कर्तारं च कलौ युगे** ॥ ३३ ॥

कं[2] संजघान कृष्णः का शीतलवाहिनी गङ्गा ।
के दारपोषणरताः **कं बलवन्तं न बाधते शीतम्** ॥ ३४ ॥

**कवयः किं न पश्यन्ति** किं न कुर्वन्ति योषितः ।
मद्यपाः किं न जल्पन्ति किं न भक्षन्ति वायसाः ॥ ३५ ॥

चक्षूरोगी कर्णरोगी रोगी चैव कफादिषु ।
**कण्ठस्नानं प्रकुर्वीत शिरस्नानसमं हि तत्** ॥ ३६ ॥

अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ।
**कृतकर्मक्षयो नास्ति कल्पकोटिशतैरपि** ॥ ३७ ॥

आश्विने कृष्णपक्षे च षष्ठ्यां भौमोऽथ रोहिणी ।
व्यतीपातस्तदा षष्ठी **कपिलानन्तपुण्यदा** ॥ ३८ ॥

मणिं वहति पादाग्रे काचः शिरसि धार्यते ।
क्रयविक्रयवेलायां **काचः काचो मणिर्मणिः** ॥ ३९ ॥

काकः कृष्णः पिकः कृष्णः को भेदः पिककाकयोः ।
वसन्तसमये प्राप्ते **काकः काकः पिकः पिकः** ॥ ४० ॥

**काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ।**
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ ४१ ॥

---

१ 'सुरक्षितं'. २ 'कंसं जघान कृष्णः काशीतलवाहिनी गङ्गा । केदारपोषणरताः कंबलवन्तं न बाधते शीतम् ॥'.

काकतालीयवत्प्राप्तं दृष्ट्वापि निधिमग्रतः ।
न स्वयं दैवमादत्ते पुरुषार्थमपेक्षते ॥ ४२ ॥
मान्या गुरुर्विनीतस्य लक्ष्मणस्य गुरुप्रिया ।
यदि सीता हि दुःखार्ता **कालो हि दुरतिक्रमः** ॥ ४३ ॥
कालः पचति भूतानि कालः संहरते प्रजाः ।
कालः सुप्तेषु जागर्ति **कालो हि दुरतिक्रमः** ॥ ४४ ॥
अपस्तरन्ति पापाणा ह्यनुघ्नन्ति हि राक्षसान् ।
कपयः कर्म कुर्वन्ति **कालस्य कुटिला गतिः** ॥ ४५ ॥
मातुलो यस्य कृष्णश्च पिता यस्य धनंजयः ।
अभिमन्योर्गतः प्राणः **कालस्य कुटिला गतिः** ॥ ४६ ॥
प्रातर्द्यूतप्रसङ्गेन ( भारत ) मध्याह्ने स्त्रीप्रसंगतः ( रामायण ) ।
रात्रौ चोरप्रसङ्गेन ( भागवत ) **कालो गच्छंति धीमताम्** ॥४७॥
आयुर्नश्यति पश्यतां प्रतिदिनं याति क्षयं यौवनं
प्रत्यायान्ति गताः पुनर्न दिवसाः **कालो जगद्भक्षकः** ।
लक्ष्मीस्तोयतरङ्गभङ्गचपला विद्युच्चलं जीवितं
तस्मान्मां शरणागतं शरणद त्वं रक्ष रक्षाधुना ॥ ४८ ॥
देवताराधनैः शास्त्रैः **कालो गच्छति धीमताम्** ।
मूर्खाणां तु दिवारात्रं द्यूतेन कलहेन वा ॥ ४९ ॥
काव्यशास्त्रविनोदेन **कालो गच्छति धीमताम्** ।
इतरेषां तु मूर्खाणां निद्रया कलहेन वा ॥ ५० ॥
**कान्यकुब्जा द्विजाः सर्वे** मागधं माथुरं विना ।
गौडद्राविडविख्याता कान्यकुब्जाः स चोद्भवाः ॥ ५१ ॥
असङ्गसङ्गदोषेण सत्याश्च मतिविभ्रमः ।
एकरात्रप्रसङ्गेन **काष्ठघण्टाविडम्बना** ॥ ५२ ॥
**काश्यां तु मरणान्मुक्ति**र्जननात्कमलालये ।
दर्शनादभ्रसरसि स्मरणादरुणाचले ॥ ५३ ॥
**कालः समविषमकरः परिभवसंमानकारकः कालः** ।
कालः करोति पुरुषं दातारं याचितारं च ॥ ५४ ॥

पुष्पेषु[1] चम्पा नगरीषु लङ्का नदीषु गङ्गा च नृपेषु रामः।
योषित्सु रम्भा पुरुषेषु विष्णुः **काव्येषु माघः कविकालिदासः**॥५५
**काव्येषु नाटकं रम्यं** तत्रापि च शकुन्तला।
तत्रापि च चतुर्थोऽङ्कस्तत्र श्लोकचतुष्टयम्॥ ५६ ॥
यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या।
अस्मान् साधु विचिन्त्य संयमधनानुच्चैः कुलं चात्मनः
शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने॥ ५७ ॥
**काले वाप्यथवाऽकाले संध्यावन्दनतत्परः।**
अविद्यो वा सविद्यो वा ब्राह्मणो मामकी तनुः॥ ५८ ॥
आदौ नम्राः पुनर्वक्राः स्वीयकार्येषु तत्पराः।
कार्यान्ते च पुनर्वक्राः **काण्वास्तु प्राणघातकाः** ॥ ५९ ॥

---

# सप्तशती.

## अध्यायः १.

**कालरात्रिर्[2]महारात्रिर्[3]मोहरात्रिश्च[4] दारुणा[5]।**
त्वं श्रीस्त्वमीश्वरी त्वं ह्रीस्त्वं बुद्धिर्बोधलक्षणा॥ ६० ॥
काव्यशास्त्रविनोदेन **कालो गच्छति धीमताम्।**
व्यसनेन च मूर्खाणां निद्रया कलहेन वा॥ ६१ ॥
विजेतव्या लङ्का चरणतरणीयो जलनिधिः
विपक्षः पौलस्त्यो रणभुवि सहायाश्च कपयः।
तथाप्येको रामः सकलमजयद्राक्षसकुलं
**क्रियासिद्धिः सत्वे वसति महतां नोपकरणे** ॥ ६२ ॥
रथस्यैकं चक्रं भुजगयमिताः सप्त तुरगा
निरालम्बो मार्गश्चरणविकलः सारथिरपि।

---

१ 'पुष्पेषु जातिर्नगरीषु काशी ( नगरीषु कांची )'. २ दीपावली. ३ शिवरात्रिः. ४ गोकुलाष्टमी. ५ होळीपौर्णिमा.

रविर्यात्येवान्तं प्रतिदिनमपारस्य नभसः
क्रियासिद्धिः सत्वे वसति महतां नोपकरणे ॥ ६३ ॥

घटो जन्मस्थानं मृगपरिजनो भूर्जवसनं
वनं वासः कन्दैरशनमपि दुस्थं वपुरिदम् ।
अगस्त्यः पाथोधिं यदकृत कराम्भोजकुहरे
क्रियासिद्धिः सत्वे वसति महतां नोपकरणे ॥ ६४ ॥

धनुः पौष्पं मौर्वी मधुकरमयी चञ्चलदृशां
दृशां कोणो बाणः सुहृदपि जडात्मा हिमकरः ।
स्वयं चैकोऽनङ्गः सकलभुवनं व्याकुलयति
क्रियासिद्धिः सत्वे वसति महतां नोपकरणे ॥ ६५ ॥

विपक्षः श्रीकण्ठो जडतनुरमात्यः शशधरो
वसन्तः सामन्तः कुसुममिषवः सैन्यमबलाः ।
तथापि त्रैलोक्यं जयति मदनो देहरहितः
क्रियासिद्धिः सत्वे वसति महतां नोपकरणे ॥ ६६ ॥

किं तया सुमहत्यापि श्रिया देशान्तरस्थया ।
रिपवो यां न पश्यन्ति सुहृद्भिर्या न भुज्यते ॥ ६७ ॥

क्रियायास्तु गुणालाभे क्रियामन्यां प्रयोजयेत् ।
पूर्वस्यां शान्तवेगायां न क्रियासंकरो हितः ॥ ६८ ॥

को निर्दग्धस्त्रिपुरजयिना कश्च कर्णस्य हन्ता
नद्याः कूलं विघटयति कः कः परस्त्रीरतश्च ।
कः संनद्धो भवति समरे भूषणं किं कुचानां
किं दुःसङ्गाद्भवति महतां मानपूजापहारः ॥ ६९ ॥

एकादशस्थे गोविन्दे मुकुन्दे श्रीनिकेतने ।
किं कुर्वन्ति ग्रहाः सर्वे शन्यर्काङ्गारकादयः ॥ ७० ॥

ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।
एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते ॥ ७१ ॥

क्षीणपुण्यां चिताभूमौ तारां निपतितामिव ।
चारित्र्यव्यपदेशाढ्यां भर्तृदर्शनदुर्गताम् ॥ ७२ ॥.

**घृतं न श्रूयते कर्णे दधि स्वप्ने न दृश्यते ।**
मुग्धे दुग्धस्य का वार्ता तक्रं शक्रस्य दुर्लभम् ॥ २ ॥

## च

**चक्रः सेव्यो नृपः सेव्यो न सेव्यः केवलं नृपः ।**
चक्रवक्रप्रभावेण[1] भैरवो भूतनायकः ॥ १ ॥
शंभुः श्वेतार्कपुष्पेण **चन्द्रमा वस्त्रतन्तुना ।**
अच्युतः स्मृतिमात्रेण माधवः करसंपुटैः ॥ २ ॥
**चञ्चलं हि मनः कृष्ण** प्रमाथि बलवद्दृढम् ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ ३ ॥
जानन्ति पशवो गन्धाद्वेदाज्जानन्ति पण्डिताः ।
**चाराज्जानन्ति राजानश्चक्षुर्भ्यामितरे जनाः** ॥ ४ ॥
मात्रा समं नास्ति शरीरपोषणं विद्यासमं नास्ति शरीरभूषणम् ।
भार्यासमं नास्ति शरीरतोषणं **चिन्तासमं नास्ति शरीरशोषणम्**॥५
अर्थातुराणां न गुरुर्न बन्धुः कामातुराणां न भयं न लज्जा ।
क्षुधातुराणां न रुचिर्न पक्वं **चिन्तातुराणां न सुखं न निद्रा** ॥६॥
न कूपखननं युक्तं प्रदीप्ते वह्निना गृहे ।
**चिन्तनीया हि विपदामादावेव प्रतिक्रिया:** ॥ ७ ॥
चोरोऽसि नवनीतानां जारोऽसि व्रजयोषिताम् ।
ध्येयोऽसि योगिनां कृष्ण **चोरजारशिखामणे** ॥ ८ ॥
लुब्धानां याचकः शत्रुर्मूर्खाणां बोधको रिपुः ।
जारिणीनां पतिः शत्रु**श्चोराणां चन्द्रमा रिपुः** ॥ ९ ॥
भार्यास्तिस्रः कफल्लस्य दाहिनी मोहिनी सती ।
तासां स्मरणमात्रेण **चोरो गच्छति निष्फलः** ॥ १० ॥

## ज

पठतो नास्ति मूर्खत्वं **जपतो नास्ति पातकम् ।**
मौनिनः कलहो नास्ति न भयं चास्ति जाग्रतः ॥ १ ॥

---

१ 'पश्य चक्रस्य माहात्म्यं मृत्पिण्डः पात्रतां गतः.

जनावनायोद्यमिनं जनार्दनं लयं सदोद्युक्ततरं सदाशिवम् ।
वदन्ति लोकाः स्वमनोनुरागात् **जनानने कः करमर्पयिष्यति**॥२॥

**ज्वरादौ लङ्घनं प्रोक्तं** ज्वरमध्ये च पाचनम् ।
ज्वरान्ते भेषजं दद्यात्सर्वज्वरविनाशनम् ॥ ३ ॥

**ज्वरादौ लङ्घनं प्रोक्तं** ज्वरमध्ये तु पाचनम् ।
ज्वरान्ते भेषजं दद्याज्ज्वरमोक्षे विरेचनम् ॥ ४ ॥

**जामाता कृष्णसर्पश्च** पावको दुर्जनस्तथा ।
विश्वासो नैव कर्तव्यः पञ्चमो भगिनीसुतः ॥ ५ ॥

सदा वक्रः सदा रुष्टः सदा पूजामपेक्षते ।
कन्याराशिस्थितो नित्यं **जामाता दशमो ग्रहः** ॥ ६ ॥

आदित्याद्या ग्रहाः सर्वे यथा तुष्यन्ति दानतः ।
सर्वस्वेपि न तुष्येत **जामाता दशमो ग्रहः** ॥ ७ ॥

भार्या ज्येष्ठा शिशुः श्यालः श्वश्रूः स्वातन्त्र्यमर्हति ।
श्वशुरस्तु प्रवासी च **जामातुर्भाग्यधोरणी** ॥ ८ ॥

प्रातर्निद्राति यथा यथात्मजाकुलितनिःसहैरङ्गैः ।
**जामातरि मुदितमनास्तथा तथा सादरं श्वश्रूः** ॥ ९ ॥

भारतः पञ्चमो वेदः सुपुत्रः सप्तमो रसः ।
दाता पञ्चदशं रत्नं **जामाता दशमो ग्रहः** ॥ १० ॥

**जातस्य हि ध्रुवो मृत्युर्ध्रुवं** जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ ११ ॥

**जाते पुत्रे पितुः स्नानं** सचैलं तु विधीयते ।
माता शुध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः ॥ १२ ॥

**जिह्वे प्रमाणं जानीहि भोजने भाषणेऽपि च ।**
अतिभुक्तिरतीवोक्तिः सद्यः प्राणापहारिणी ॥ १३ ॥

**जिता धनवता दारा** जिता वस्त्रवता सभा ।
जितो ह्यभ्यागतो गोभिर्दारिद्र्यं कृषिभिर्जितम् ॥ १४ ॥

बोद्धारो मत्सरग्रस्ताः प्रभवः स्मयदूषिताः ।
अबोधोपहताश्चान्ये **जीर्णमङ्गे सुभाषितम्** ॥ १५ ॥

विनाशे बहवो दोषा **जीवन्प्राप्नोति भद्रकम्।**
तस्मात्प्राणान्धरिष्यामि ध्रुवो जीवति संगमः ॥ १६ ॥
**जीर्णमन्नं प्रशंसन्ति** भार्यां च गतयौवनम्।
शूरं विजितसंग्रामं पारंगततपस्विनम् ॥ १७ ॥
अहस्तानि सहस्तानामपदानि चतुष्पदाम्।
फल्गूनि तत्र महतां **जीवो जीवस्य जीवनम्** ॥ १८ ॥
न मृतो जयते शत्रून् **जीवन्भद्राणि पश्यति।**
मृतस्य भद्राणि कुतः कौरवाय कुतो जयः ॥ १९ ॥
धिक्करोषि तथापि त्वं **ज्येष्ठो भ्राता पितुः समः।**
कालो राघवरूपेण जातो दशरथालये ॥ २० ॥
श्वश्रूश्च मातृतुल्या स्यात्तथा ज्येष्ठा स्वसापि च।
तथा मातुः सपत्नी च **ज्येष्ठो भ्राता पितुः समः** ॥ २१ ॥
फलन्ति वेदाः कालेषु पुराणं त्वेकमासके।
सद्यः फलति गान्धर्वी **ज्योतिर्वैद्यं निरन्तरम्** ॥ २२ ॥
**ज्योतिषं जलदे मिथ्या** मिथ्या श्वासिनि वैद्यकम्।
योगो वह्वशने मिथ्या मिथ्या ज्ञानं च मद्यपे ॥ २३ ॥

## त

भोजनान्ते च किं पेयं जयन्तः कस्य वै सुतः।
कथं विष्णुपदं प्रोक्तं **तक्रं शक्रस्य दुर्लभम्** ॥ १ ॥
अमृतं दुर्लभं नृणां देवानामुदकं तथा।
पितॄणां दुर्लभः पुत्रः **तक्रं शक्रस्य दुर्लभम्** ॥ २ ॥
अकृत्वर्थमिति ज्ञात्वा शक्रो न हुतवान्पुरा।
अदत्तमिति शास्त्रार्थात् **तक्रं शक्रस्य दुर्लभम्** ॥ ३ ॥
घृतं न श्रूयते कर्णे दधि स्वप्नेपि दुर्लभम्।
मुग्धे दुग्धस्य का वार्ता **तक्रं शक्रस्य दुर्लभम्** ॥ ४ ॥
क्षीरेण दग्धजिह्वस्तक्रं **फूत्कृत्य पामरः पिबति।**
दम्भिनमवलोक्य जनस्तद्वन्मां शङ्कते त्वया त्यक्तम् ॥ ५ ॥

स्त्री विनश्यति गर्वेण तपः क्रोधेन नश्यति ।
गावो दूरप्रसारेण हरिणी लोभलिप्सया[1] ॥ ६ ॥

लालनाद्बहवो दोषास्ताडनाद्बहवो गुणाः ।
तस्मात्पुत्रं च शिष्यं च ताडयेन्न तु लालयेत् ॥ ७ ॥

तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ ८ ॥

मूर्खोऽपि शोभते तावत्सभायां वस्त्रवेष्टितः ।
तावच्च शोभते मूर्खो यावत्किंचिन्न भाषते ।

तावन्महतां महती यावत्किमपि हि न याच्यते लोकम् ।
बलिमनुयाचनसमये श्रीपतिरपि वामनो जातः ॥ १० ॥

मुखं पद्मदलाकारं वाणी चन्दनशीतला ।
हृदयं कर्तरीतुल्यं त्रिविधं धूर्तलक्षणम् ॥ ११ ॥

गुरुषु मिलितेषु शिरसा प्रणमसि लघुषून्नता समेषु समा ।
उचितज्ञासि तुले किं तुलयसि गुञ्जाफलैः कनकम् ॥ १२ ॥

मनसैव कृतं पापं न शरीरकृतं कृतम् ।
येनैवालिङ्गिता कान्ता तेनैवालिङ्गिता सुता ॥ १३ ॥

तेजीयसां न दोषाय अग्नेः सर्वभुजो यथा ।
ईश्वराणां वचः सत्यं तथैवाचरितं क्वचित् ॥ १४ ॥

किमद्य मम संपन्नं प्रातर्वा भविता पुनः ।
इति चिन्ताज्वरो नास्ति तेन जीवाम्यनामयः ॥ १५ ॥

जरामरणदुःखेषु राज्यलाभसुखेषु च ।
न बिभेमि न हृष्यामि तेन जीवाम्यनामयः ॥ १६ ॥

यथाकालमुपायातावर्थानर्थौ समौ मम ।
हस्ताविव शरीरस्थौ तेन जीवाम्यनामयः ॥ १७ ॥

यदायदा मुने किंचिद्विजानासि तदातदा ।
मतिरायाति नौद्धत्यं तेन जीवाम्यनामयः ॥ १८ ॥

करोमीशोऽपि नाक्रान्ति परितापेन खेदवान् ।
दरिद्रोऽपि न वाञ्छामि तेन जीवाम्यनामयः ॥ १९ ॥

---

१. गानशङ्कया.

सुखितोऽस्मि सुखापन्ने दुःखितो दुःखिते जने ।
सर्वस्य प्रियमित्रं च **तेन जीवाम्यनामयः** ॥ २० ॥
अयं बन्धुः परश्चायं ममायमयमन्यतः ।
इति ब्रह्मन्न जानामि **तेन जीवाम्यनामयः** ॥ २१ ॥
अपरिचलयासक्त्या सुदृशा स्निग्धमुग्धया ।
ऋजु पश्यामि सर्वत्र **तेन जीवाम्यनामयः** ॥ २२ ॥
यस्तु संचरते देशान्यस्तु सेवेत पण्डितान् ।
तस्य विस्तारिता बुद्धि**स्तैलबिन्दुरिवाम्भसि** ॥ २३ ॥

## द्

**ददाति प्रतिगृह्णाति** गुह्यमाख्याति पृच्छति ।
भुङ्क्ते भोजयते नित्यं षड्विधं प्रीतिलक्षणम् ॥ १ ॥
**ददाति प्रतिगृह्णाति** नान्यथैषा प्रसिध्यति ।
इत्थंरूपेण कीलेन महादेवेन कीलितम् ॥ २ ॥
दुर्जनदूषितमनसां पुंसां सुजनेऽप्यविश्वासः ।
वालः पायसदग्धो **दध्यपि फूत्कृत्य भक्षयति** ॥ ३ ॥
जडबुद्धिर्जडो मूर्खः कथं जानामि निर्गुणम् ।
**दण्ड एव हि मूर्खाणां सन्मार्गप्रापकः प्रभो** ॥ ४ ॥
निर्द्रव्यं पुरुषं सदैव विकलं सर्वत्र मन्दादरं
तातभ्रातृसुहृज्जनादिकुपितं दृष्ट्वा न संभाषितम् ।
भार्या रूपवती कुरङ्गनयना स्नेहेन नालिङ्गते
तस्माद्द्रव्यमुपार्जयाशु सुमते **द्रव्येण सर्वे वशाः** ॥ ५ ॥
माता निन्दति नाभिनन्दति पिता भ्राता न संभाषते
भृत्यः कुप्यति नानुगच्छति सुतः कान्ता च नालिङ्गते ।
अर्थप्रार्थनशङ्कया न कुरुतेऽप्यालापमात्रं सुहृत्
तस्माद्द्रव्यमुपार्जयाशु सुमते **द्रव्येण सर्वे वशाः** ॥ ६ ॥
इन्द्रं त्र्यक्षिधरं त्वमन्थमुदधिं पञ्चाननं पद्मजं
चाब्धिं स्वादुजलं शिवं सितगलं कामं च सद्विग्रहम् ।
शैलान्पक्षधरांस्तथैव च हयांल्लक्ष्मीपतिं पिङ्गटं
**दृष्टं सर्वमिदं कथंचिन्न रघुराड्दत्तं स्वयं हारितम्** ॥ ७ ॥

यस्य नास्ति विवेकस्तु केवलं यो वहुश्रुतः ।
स न जानाति शास्त्रार्थान् **दर्वी पाकरसानिव** ॥ ८ ॥
लग्ने शुक्रो वुधो यस्य यस्य केन्द्रे वृहस्पतिः ।
**दशमोऽङ्गारको यस्य स जातः कुलदीपकः** ॥ ९ ॥
षष्टपुष्ठे भवेद्दादा सुन्दरी वहिनी तथा ।
**दन्तभग्नो भवेद्भावा** आवा च गतभर्तृका ॥ १० ॥
अधीत्य चतुरो वेदान्धर्मशास्त्राण्यनेकशः ।
परं तत्त्वं न जानाति **दर्वी पाकरसानिव** ॥ ११ ॥
**दानं प्रियवाक्सहितं** ज्ञानमगर्वं क्षमान्वितं शौर्यम् ।
वित्तं त्यागसमेतं दुर्लभमेतच्चतुर्विधं भद्रम् ॥ १२ ॥
शक्ति करोति संचारे शीतोष्णे मर्षयत्यपि ।
दीपयत्युदरे वह्निं **दारिद्र्यं परमौषधम्** ॥ १३ ॥
ऐश्वर्यतिमिरं चक्षुः पश्यन्नपि न पश्यति ।
तस्य निर्मलतायां तु **दारिद्र्यं परमौषधम्** ॥ १४ ॥
वयोवृद्धास्तपोवृद्धा ज्ञानवृद्धा वहुश्रुताः ।
इत्येते धनवृद्धस्य **द्वारे तिष्ठन्ति किंकराः** ॥ १५ ॥
खादन्न गच्छामि हसन्न जल्पे गतं न शोचामि कृतं न मन्ये ।
**द्वाभ्यां तृतीयो न भवामि राजन्** किं कारणं भोज भवामि मूर्खः ॥
यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।
**ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा** ॥ १७ ॥
एकेन तिष्ठताधस्तादन्येनोपरि तिष्ठता ।
**दातृयाचकयोर्भेदः कराभ्यामेव सूचितः** ॥ १८ ॥
**दिवा निरीक्ष्य वक्तव्यं रात्रौ नैव च नैव च ।**
संचरन्ति महाधूर्ता वटे वररुचिर्यथा ॥ १९ ॥
ग्रीष्मवर्जेषु कालेषु **दिवा स्वापो निषिध्यते ।**
उचितो हि दिवा स्वापो यतो नित्यः शरीरिणाम् ॥ २० ॥

---

१. न्ति हि भूतानि.

बालोपि चोरः स्थविरोपि चोरः समागतः प्राघुणिकोपि चोरः ।
**दिल्लीप्रदेशे मथुराप्रदेशे चोरं विना न प्रसवन्ति नार्यः**२१

**दीनो वा राज्यहीनो वा यो मे भर्ता स मे गुरुः ।**
तं नित्यमनुरक्तास्मि यथा सूर्यं सुवर्चला ॥ २२ ॥

**दुर्जनं प्रथमं वन्दे** सज्जनं तदनन्तरम् ।
मुखप्रक्षालनात्पूर्वं गुदप्रक्षालनं यथा ॥ २३ ॥

कृते प्रतिकृतिं कुर्याद्धिंसने प्रतिहिंसनम् ।
तत्र दोषो न पतति **दुष्टे दुष्टं समाचरेत्** ॥ २४ ॥

**दूरस्थाः पर्वता रम्या** वेश्या[1] च मुखमण्डने ।
युद्धस्य वार्ता रम्या च त्रीणि रम्याणि दूरतः ॥ २५ ॥

यस्य भार्या विरूपाक्षी परमन्दिरकाङ्क्षिणी ।
कुलक्षणा कुशीला च **दूरतः परिवर्जयेत्** ॥ २६ ॥

विद्यते कलहो यत्र गृहे नित्यमकारणः ।
तद्गृहं जीवितं वाञ्छन् **दूरतः परिवर्जयेत्** ॥ २७ ॥

गजं मत्तं द्विजं भ्रष्टं वृषभं काममोहितम् ।
नृपमन्तःपुरगतं **दूरतः परिवर्जयेत्** ॥ २८ ॥

खरं श्वानं गजं मत्तं रण्डां च बहुभाषिणीम् ।
राजपुत्रं कुमित्रं च **दूरतः परिवर्जयेत्** ॥ २९ ॥

कृष्णसर्पं द्विजं नष्टं शूद्रं चाक्षरसंयुतम् ।
गर्दभं जारजातं च **दूरतः परिवर्जयेत्** ॥ ३० ॥

महानदीप्रतरणं महापुरुषविग्रहम् ।
महाजनविरोधश्च **दूरतः परिवर्जयेत्** ॥ ३१ ॥

अप्रियं परुषं चापि परद्रोहं परस्त्रियम् ।
अधर्ममनृतं चैव **दूरात्प्राज्ञो विवर्जयेत्** ॥ ३२ ॥

अश्वं नैव गजं नैव व्याघ्रं नैव च नैव च ।
अजापुत्रं बलिं दद्यात् **देवो दुर्बलघातकः** ॥ ३३ ॥

सर्वोद्वेगकरं मृगादनमसुं संत्यज्य हा धिक् त्वया
लोकस्यानपकारिणं गिरिनदीतीराटवीनिर्वृतम् ।

---

१. बन्धुरम्यं परस्परम्.

अश्नन्तं तृणमेणशावसदयं व्याध घ्नतासुं वृथा
**देवो दुर्बलघातको**ऽयमिति सा गाथा यथार्थीकृता ॥ ३४ ॥
अश्वप्लुतं माधवगर्जितं च स्त्रीणां च चित्तं पुरुषस्य भाग्यम् ।
अवर्षणं चाप्यतिवर्षणं च **देवो न जानाति कुतो मनुष्यः** ॥ ३५ ॥
अहोऽतिनिर्मोहि जनस्य चित्रं परं चरित्रं गदितुं न योग्यम् ।
मुखे हि चान्यद्धृदि भाव्यमन्यत् **देवो न जानाति कुतो मनुष्यः** ॥
**देहे पित्तं गृहे वित्त**मेकचित्तं कुटुम्बिनाम् ।
ज्येष्ठपुत्रमतिश्रेष्ठं न भवन्ति गृहे गृहे ॥ ३७ ॥
शकटं पञ्चहस्तेन दशहस्तेन वाजिनम् ।
गजं हस्तसहस्रेण **देशत्यागेन दुर्जनम्** ॥ ३८ ॥
अर्चकस्य तपोयोगादर्चनस्यातिशायनात् ।
आभिरूप्याच्च मूर्तीनां **देवः सांनिध्यमृच्छति** ॥ ३९ ॥
**दैवं फलति सर्वत्र** न विद्या नच पौरुषम् ।
समुद्रमथनाल्लेभे हरिर्लक्ष्मीं हरो विषम् ॥ ४० ॥
मनोरथान्करोत्युच्चैर्जनो दैवहतानपि ।
सिद्ध्यसिद्ध्योः समं कुर्यात् **दैवं हि फलसाधनम्** ॥ ४१ ॥
आसाद्यापि महोदधिं न वितृषो जातो जलैर्वाडवो
मेघं प्राप्य न चातकोऽपि चरणौ भानुं न लेभेऽरुणः ।
चन्द्रः शंकरशेखरेऽपि निवसन्पक्षक्षये क्षीयते
प्रायः सज्जनसंगतौ हि लभते **दैवानुरूपं फलम्** ॥ ४२ ॥
कान्तं वक्ति कपोतिकाकुलतया नाथान्तकालोऽधुना
व्याधोऽधो धृतचापसज्जितशरः श्येनः परिभ्रामति ।
इत्थं सत्यहिना स दष्ट इषुणा श्येनोपि तेनाहतः
तूर्णं तौ तु यमालयं प्रति गतो **दैवी विचित्रा गतिः** ॥ ४३ ॥
सर्वोपनिषदो गावो **दोग्धा गोपालनन्दनः** ।
पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत् ॥ ४४ ॥

## ध

गुणाः खलु गुणा एव न गुणा भूतिहेतवः ।
**धनसंचयकर्तॄणां भाग्यानि पृथगेव हि** ॥ १ ॥

युधिष्ठिरः कस्य पुत्रो गङ्गा वहति कीदृशी ।
हंसस्य शोभा का वास्ते **धर्मस्य त्वरिता गतिः** ॥ २ ॥
क्षणं चित्तं क्षणं वित्तं क्षणं जीवति मानवः ।
यमस्य करुणा नास्ति **धर्मस्य त्वरिता गतिः** ॥ ३ ॥
कानीनस्य मुनेः स्वबान्धववधूवैधव्यविध्वंसिनो
नप्तारः खलु गोलकस्य तनयाः कुण्डाः स्वयं पाण्डवाः ।
तेऽमी पञ्च समानयोनिरतयस्तेषां गुणोत्कीर्तना-
दक्षय्यं सुकृतं भवेदविकलं **धर्मस्य सूक्ष्मा गतिः** ॥ ४ ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
**धर्मसंस्थापनार्थाय संभवामि युगेयुगे** ॥ ५ ॥
**धर्मेण हन्यते व्याधिर्हन्यन्ते** वै तथा ग्रहाः ।
धर्मेण हन्यते शत्रुर्यतो धर्मस्ततो जयः ॥ ६ ॥
सन्मित्रं सधनं स्वयोषिति रतिश्चाज्ञापराः सेवकाः
सानन्दं सदनं सुताश्च सुधियः कान्ता मनोहारिणी ।
आतिथ्यं शिवपूजनं प्रतिदिनं मिष्टान्नपानं गृहे
साधोः सङ्गमुपासते हि सततं **धन्यो गृहस्थाश्रमः** ॥ ७ ॥
नित्यं ब्रह्म यथा स्मरन्ति मुनयो हंसा यथा मानसं
सारङ्गा जलदागमं वनगजा ध्यायन्ति रेवां यथा ।
युष्मद्दर्शनलालसाः प्रतिदिनं युष्मान् स्मरामो वयं
**धन्यः कोऽपि स वासरो यदि भवेद्यत्रावयोः संगमः**॥८॥
**धर्मेण हन्यते व्याधिर्ग्रहो** धर्मेण हन्यते ।
धर्मेण हन्यते शत्रुर्यतो धर्मस्ततो जयः ॥ ९ ॥
धिक् गृहं गृहिणीशून्यं धिक्कलत्रमपुत्रकम् ।
धिक् पुत्रमविनीतं च **धिक् ज्योतिषमजातकम्** ॥ १० ॥
धिगस्तु खलु मानुष्यं **धिगस्तु परवश्यताम्** ।
न शक्यं यत्परित्यक्तुमात्मच्छन्देन जीवितम् ॥ ११ ॥

## न

अलंकारप्रियो विष्णुर्जलधाराप्रियः शिवः ।
**नमस्कारप्रियो भानुर्ब्राह्मणो** भोजनप्रियः ॥ १ ॥

क्षान्तितुल्यं तपो नास्ति संतोषान्न सुखं परम् ।
नास्ति तृष्णासमो व्याधिर्न च धर्मो दयापरः ॥ २ ॥
न च विद्यासमो बन्धुर्न च व्याधिसमो रिपुः ।
न चापल्यसमः स्नेही न च धर्मो दयापरः ॥ ३ ॥
नान्नोदकसमं दानं न तिथिर्द्वादशीसमा ।
न गायत्र्याः परो मन्त्रो न मातुः परदैवतम् ॥ ४ ॥
न गच्छेतां पितापुत्रौ न गच्छेत्सोदरद्वयम् ।
नव नार्यो न गच्छेयुर्न गच्छेद्ब्राह्मणत्रयम् ॥ ५ ॥
न गच्छेच्छूद्रचातुष्कं न गच्छेद्वैश्यपञ्चकम् ।
न गच्छेद्युग्मकं राज्ञोर्न गच्छेद्ब्राह्मणत्रयम् ॥ ६ ॥
हस्तिना ताड्यमानोपि न गच्छेज्जैनमन्दिरम् ।
न वदेद्यावनीं भाषां प्राणैः कण्ठगतैरपि ॥ ७ ॥
शुनः पुच्छमिव व्यर्थं जीवितं विद्यया विना ।
न गुह्यगोपने दक्षं नच दंशनिवारणे ॥ ८ ॥
चाण्डालानां सहस्रैश्च सूरिभिस्तत्त्वदर्शिभिः ।
समो हि यवनः प्रोक्तो न नीचो यवनात्परः ॥ ९ ॥
पुनर्वित्तं पुनर्मित्रं पुनर्भार्या पुनर्मही ।
एतत्सर्वं पुनर्लभ्यं न शरीरं पुनः पुनः ॥ १० ॥
आयुर्वित्तं गृहच्छिद्रं रहस्यं मन्त्रमौषधम् ।
तपो दानावमानौ च नव गोप्यानि कारयेत् ॥ ११ ॥
धनिकः श्रोत्रियो राजा नदी वैद्यस्तु पञ्चमः ।
पञ्च यत्र न विद्यन्ते न तत्र दिवसं वसेत् ॥ १२ ॥
लोकयात्रा भयं लज्जा दाक्षिण्यं त्यागशीलता ।
पञ्च यत्र न विद्यन्ते न तत्र दिवसं वसेत् ॥ १३ ॥
ऋणदाता च दैवज्ञः श्रोत्रियः सुजला नदी ।
यत्र ह्येते न विद्यन्ते न तत्र दिवसं वसेत् ॥ १४ ॥
यस्मिन्देशे न संमानो न प्रीतिर्न च बांधवाः ।
न च विद्यागमः कश्चिन्न तत्र दिवसं वसेत् ॥ १५ ॥

यत्र विद्यागमो नास्ति यत्र नास्ति धनागमः ।
यत्र चात्मसुखं नास्ति **न तत्र दिवसं वसेत्** ॥ १६ ॥
कृपणेन समो दाता **न भूतो न भविष्यति** ।
अस्पृशन्नेव वित्तानि यः परेभ्यः प्रयच्छति ॥ १७ ॥
जीवन्ति च म्रियन्ते च मद्विधाः क्षुद्रजन्तवः ।
अनेन सदृशो लोके **न भूतो न भविष्यति** ॥ १८ ॥
भृत्यकार्यं हनुमता कृतं सर्वमशेषतः ।
सुग्रीवसदृशो लोके **न भूतो न भविष्यति** ॥ १९ ॥
वेङ्कटाद्रिसमं स्थानं ब्रह्माण्डे नास्ति किंचन ।
वेङ्कटेशसमो देवो **न भूतो न भविष्यति** ॥ २० ॥
द्वाविमौ पुरुषौ लोके **न भूतौ न भविष्यतः** ।
प्रार्थितं यश्च कुरुते यश्च नार्थयते परम् ॥ २१ ॥
**न देवाय न धर्माय** न बन्धुभ्यो न चार्थिने ।
दुर्जनेनार्जितं द्रव्यं भुज्यते राजतस्करैः ॥ २२ ॥
**न देवाय न धर्माय** विधवायै नमो नमः ।
प्रज्वालितानि शष्पाणि नाङ्गाराय न भस्मने ॥ २३ ॥
**नराणां नापितो धूर्तः** पक्षिणां चैव वायसः ।
चतुष्पदां शृगालस्तु स्त्रीणां धूर्ता च मालिनी ॥ २४ ॥
**न बुद्धिभेदं जनये**दज्ञानां कर्मसङ्गिनाम् ।
जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन् ॥ २५ ॥
**न जातु कामः कामाना**मुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ २६ ॥
अन्धं पतिं प्राप्य विलासिनीनां कटाक्षबाणा विफला भवन्ति ।
तद्वत्कुजादित्यशनैश्चराणां **न वारदोषाः प्रभवन्ति रात्रौ** ॥२७॥
तिथेर्न दोषोऽभ्युदये च काले नक्षत्रदोषस्त्वभिजित्प्रकाशे ।
योगादिदोषोस्तमये च काले **न वारदोषाः प्रभवन्ति रात्रौ**॥२८॥
**न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते** ।
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम् ॥ २९ ॥

नलिकागतमपि कुटिलं न भवति सरलं शुनः पुच्छम्
तद्वत्खलजनहृदयं बोधितमपि नैव याति माधुर्यम् ॥ ३० ॥
गन्तव्यं सलिलपथे द्रष्टव्या मदनपूरिता रामाः ।
यद्यपि न भवति लाभो नयनसुखं को निवारयति ॥ ३१ ॥

पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
पुत्रो रक्षति वार्धक्ये न स्त्री स्वातन्त्र्यमर्हति ॥ ३२ ॥

अमुष्मिन्नुद्याने विहगखग एप प्रतिकलं
विलोलः काकोलः क्वणति खलु यावत्कटुतरम् ।
सखे तावत्कीर द्रढय हृदि वाचं च सकलां
न मौनेन न्यूनो भवति गुणभाजां गुणगणः ॥ ३३ ॥

अबुद्धिमाश्रितानां च क्षन्तव्यमपराधिनाम् ।
नहि सर्वत्र पाण्डित्यं सुलभं पुरुपं क्वचित् ॥ ३४ ॥

भार्गवेण हता माता एकजायाश्च पाण्डवाः ।
परदाररतः कृष्णो न देवचरितं चरेत् ॥ ३५ ॥

दिवसस्याष्टमे भागे मन्दीभूते दिवाकरे ।
नक्तं तत्र विजानीयान्न नक्तं निशि भोजनम् ॥ ३६ ॥

न विषं भक्षयेत्प्राज्ञो न क्रीडेत्पन्नगैः सह ।
न निन्देद्योगिवृन्दानि ब्रह्मद्वेषं न कारयेत् ॥ ३७ ॥

यस्य ये च गुणाः सन्ति विकसन्ति न ते स्वयम् ।
नहि कस्तूरिकामोदः शपथेन निवार्यते ॥ ३८ ॥

पदापि युवतीं भिक्षुर्न स्पृशेद्दारवीमपि ।
स्पृशन्करीव बध्येत करिण्या अङ्गसङ्गतः ॥ ३९ ॥

यदि सन्ति गुणाः पुंसां विकसन्त्येव ते स्वयम् ।
नहि कस्तूरिकामोदः शपथेन विभाव्यते ॥ ४० ॥

न तथास्य भवेत्क्लेशो बन्धश्चान्यप्रसङ्गतः ।
योषित्सङ्गाद्यथा पुंसो यथा तत्सङ्गिसङ्गतः ॥ ४१ ॥

चारणैर्बन्दिभिर्नीचैर्नापितैर्मालिकैरपि ।
न मन्त्रं मतिमान्कुर्यात्सार्धं शिशुभिरेव च ॥ ४२ ॥

---

१ वटौ.

व्याधेस्तत्त्वपरिज्ञानं वेदनायाश्च निग्रहः ।
**एतद्वैद्यस्य वैद्यत्वं न वैद्यः प्रभुरायुषः** ॥ ४३ ॥

न संध्यां संधत्ते नियमितनिसाजं न कुरुते
न वा मौञ्जीबन्धं कलयति न वा सुंनतविधिम् ।
न रोजां जानीते व्रतमपि हरेर्नैव कुरुते
**न काशी मक्का वा शिवशिव न हिन्दुर्न यवनः** ॥४४॥

आपातालगभीरे मज्जति नीरे निदाघसंतप्तः ।
**न स्पृशति पल्वलाम्भः पञ्जरशेषोऽपि कुञ्जरः क्वापि**४५

**न विश्वसेत्कुमित्रं च** मित्रं चापि न विश्वसेत् ।
कदाचित्कुपितं मित्रं सर्वं गुप्तं प्रकाशयेत् ॥ ४६ ॥

अन्तस्तिमिरनाशाय शाब्दबोधो निरर्थकः ।
**न नश्यति तमो नाम कृतया दीपवार्तया** ॥ ४७ ॥

घृष्टं घृष्टं पुनरपि पुनश्चन्दनं चारुगन्धं
छिन्नं छिन्नं पुनरपि पुनः स्वादु चैवेक्षुदण्डम् ।
दग्धं दग्धं पुनरपि पुनः काञ्चनं कान्तवर्णं
**न प्राणान्ते प्रकृतिविकृतिर्जायते चोत्तमानाम्** ॥ ४८ ॥

पुस्तकप्रत्ययाधीतं नाधीतं गुरुसंनिधौ ।
**न शोभते सभामध्ये जारगर्भ इव स्त्रियः** ॥ ४९ ॥

नाजारजः पितृद्वेषी नाजारा भर्तृघातिनी ।
नामुनिर्ग्रन्थकर्ता च **नाविष्णुः पृथिवीपतिः** ॥ ५० ॥

नाऋषिः कुरुते काव्यं **नारुद्रः क्रमपाठकः** ।
नादेवांशो ददत्यन्नं **नाविष्णुः पृथिवीपतिः** ॥ ५१ ॥

भोज्यं भोजनशक्तिश्च रतिशक्तिर्वरस्त्रियः ।
विभवो दानशक्तिश्च **नाल्पस्य तपसः फलम्** ॥ ५२ ॥

आन्ध्रत्वमान्ध्रभाषा च प्राभाकरपरिश्रमः ।
तत्रापि याजुषी शाखा **नाल्पस्य तपसः फलम्** ॥ ५३ ॥

सत्यं सत्यं मनोर्वाक्यं **नादत्तमुपतिष्ठते** ।
अम्बुभिः पूरिता पृथ्वी चातकस्य मरुस्थली ॥ ५४ ॥

---

१ सुंता. २ मीमांसाशास्त्रस्य.

खनन्तु सप्तपातालं भ्रमन्त्वाकाशमण्डले ।
धावन्तु सकलां पृथ्वीं **नादत्तमुपतिष्ठते** ॥ ५५ ॥
पिता रत्नाकरो यस्य लक्ष्मीर्यस्य सहोदरी ।
शङ्खो भिक्षाटनं कुर्यान्नादत्तमुपतिष्ठते ॥ ५६ ॥
न पुत्रात्परमो लाभो न भार्यायाः परं सुखम् ।
न धर्मात्परमं मित्रं **नानृतात्पातकं परम्** ॥ ५७ ॥
क्षत्रधर्मे परा हिंसा याञ्चायां लाघवं महत् ।
असत्यमेव वाणिज्यं **नानृतात्पातकं परम्** ॥ ५८ ॥
**नानृतात्पातकं किंचित्** न सत्यात्सुकृतं परम् ।
विवेकान्न परो बन्धुरिति वेदविदो विदुः ॥ ५९ ॥
माने तपसि शौर्ये वा विज्ञाने विनये नये ।
विस्मयो नहि कर्तव्यो **नानारत्ना वसुन्धरा** ॥ ६० ॥
पिण्डेपिण्डे मतिर्भिन्ना तुण्डेतुण्डे सरस्वती ।
देशेदेशे विभाषा स्यान्नानारत्ना वसुन्धरा ॥ ६१ ॥
दर्शनाद्धरते चित्तं स्पर्शनाद्धरते बलम् ।
संभोगाद्धरते वीर्यं **नारी प्रत्यक्षराक्षसी** ॥ ६२ ॥
गर्भस्थो हरते दुग्धं जन्मतः स्नेहमाहरेत् ।
पश्चाद्धनविभागेन **नास्ति बन्धुसमो रिपुः** ॥ ६३ ॥
नास्ति क्षुधासमं दुःखं नास्ति रोगः क्षुधासमः ।
नास्त्याहारसमं सौख्यं **नास्ति क्रोधसमो रिपुः** ॥ ६४ ॥
भिक्षो कन्था श्लथा ते नहि शफरिवधे जालमश्नासि मत्स्यां-
स्ते वै मद्योपदंशाः पिबसि मधु समं वेश्यया यासि वेश्याम् ।
दत्वाङ्घ्रिं मूर्ध्न्यरीणां तव किमु रिपवो भित्तिभेत्तासि येषां
चोरोसि द्यूतहेतोस्त्वयि सकलमिदं **नास्ति नष्टे विचारः**॥६५॥
**नाकाले म्रियते जन्तुर्**विद्धः शरशतैरपि ।
कुशाग्रेणैव संस्पृष्टः प्राप्तकाले न जीवति ॥ ६६ ॥
सत्यं वतेदं प्रवदन्ति लोके **नाकालमृत्युर्भवतीति सन्तः** ।
यत्राहमेवं परिभर्त्स्यमाना जीवामि यस्मात्क्षणमप्यपुण्या ॥ ६७॥
कोकिलानां स्वरं रूपं **नारीरूपं पतिव्रता** ।

विद्या रूपं कुरूपाणां क्षमा रूपं तपस्विनाम् ॥ ६८ ॥

नाथेति परुषवचनं शठेति दासेऽस्त्यनुग्रहो यत्र ।
न भवति यदि दाम्पत्ये **नारी रज्जुः पशुः पुरुषः** ॥ ६९ ॥

अनुष्ठितं तु यद्देवैर्ऋषिभिर्यदनुष्ठितम् ।
**नानुष्ठेयं मनुष्यैस्तु तदुक्तं कर्म आचरेत्** ॥ ७० ॥

पुण्यैर्मूलफलैः प्रियप्रणयिनां वृत्तिं कुरुष्वाधुना
भूशय्यां नवपल्लवैः कुरु तृणैरुत्तिष्ठ यामो वने ।
क्षुद्राणामविवेकमूढमनसां यत्रेश्वराणां सदा
वित्तव्याध्यविवेकसंकुलगिरां **नामापि न श्रूयते** ॥ ७१ ॥

संतप्तायसि संस्थितस्य पयसो **नामापि न ज्ञायते**
मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते ।
स्वात्यां सागरशुक्तिमध्यपतितं तज्जायते मौक्तिकं
प्रायेणाधममध्यमोत्तमगुणः संसर्गतो जायते ॥ ७२ ॥

**नाटके भवभूतिर्वा वयं वा वयमेव वा ।**
उत्तरे रामचरिते भवभूतिर्विशेषतः ॥ ७३ ॥

येषां हृदिस्थो भगवान्मङ्गलायतनं हरिः ।
नित्योत्सवः सदा तेषां **नित्यश्रीर्नित्यमङ्गलम्** ॥ ७४ ॥

तृणं ब्रह्मविदः स्वर्गस्तृणं शूरस्य जीवनम् ।
जिताक्षस्य तृणं नारी **निस्पृहस्य तृणं जगत्** ॥ ७५ ॥

उदारस्य तृणं वित्तं शूरस्य मरणं तृणम् ।
विरक्तस्य तृणं भार्या **निस्पृहस्य तृणं जगत्** ॥ ७६ ॥

आद्वीपात्परतोऽप्यमी नृपतयः सर्वे समभ्यागताः
कन्येयं कलधौतकोमलरुचिः कीर्तिश्च लाभः परः ।
नाकृष्टं न च टङ्कितं न नमितं नोत्थापितं स्थानतः
केनापीदमहो महद्धनुरिदं **निर्वीरमुर्वीतलम्** ॥ ७७ ॥

तस्मात्त्वमुत्तिष्ठ यशो लभस्व जित्वा शत्रून्भुङ्क्ष्व राज्यं समृद्धम् ।
मयैवैते निहताः पूर्वमेव **निमित्तमात्रं भव सव्यसाचिन्**॥७८॥

विपुलहृदयाभियोग्ये खिद्यति काव्ये जडो न मौर्ख्ये स्वे ।
**निन्दति कञ्चुकिकारं प्रायः शुष्कस्तनी नारी** ॥ ७९ ॥

वृश्चिके दर्शनं याति **निराशाः पितरो गताः** ।
तत्र स्वभुवनं यान्ति शापं दत्वा सुदारुणम् ॥ ८० ॥
मुक्तकच्छा तु या नारी मुक्तकेशा तथैव च ।
हसते चैव रुदति **निराशाः पितरो गताः** ॥ ८१ ॥
स्वगोत्रैः क्रियते पाकं न पाकं चान्यगोत्रिभिः ।
विवेकी क्रियते पाकं ? **निराशाः पितरो गताः** ॥ ८२ ॥
अज्ञानात्कुरुते श्राद्धं योऽग्निश्रवणवर्जितम् ।
श्राद्धहन्ता भवेत्कर्ता **निराशाः पितरो गताः** ॥ ८३ ॥
अग्रे माहिषिकं दृष्ट्वा मध्ये तु वृषलीपतिम् ।
अन्ते वार्धुषिकं दृष्ट्वा **निराशाः पितरो गताः** ॥ ८४ ॥
न संपत्तिक्रियासक्तिर्भेषजं च न विद्यते ।
सर्वरोगविनाशाय **निशान्ते च पयः पिबेत्** ॥ ८५ ॥
दिनान्ते च पिबेद्दुग्धं **निशान्ते च पिबेत्पयः** ।
भोजनान्ते पिबेत्तक्रं किं वैद्यस्य प्रयोजनम् ॥ ८६ ॥
भगिनी भगिनीभर्ता दुहिता दुहितुः पतिः ।
श्राद्धकालेपूजिताश्चे**न्निराशाः पितरो गताः** ॥ ८७ ॥
कूष्माण्डं महिषीक्षीरं विल्वपत्रमथ द्विजाः ।
श्राद्धकाले पूजितं चे**न्निराशाः पितरो गताः** ॥ ८८ ॥
वनेषु दोषाः प्रभवन्ति रागिणां गृहेषु पञ्चेन्द्रियनिग्रहस्तपः ।
अकुत्सिते कर्मणि यः प्रवर्तते **निवृत्तरागस्य गृहं तपोवनम्** ८९
भेदाभेदौ सपदि गलितौ पुण्यपापे विशीर्णे
मायामोहौ क्षयमुपगतौ नष्टसंदेहवृत्तेः ।
शब्दातीतं त्रिगुणरहितं प्राप्य तत्त्वाववोधं
**निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः** ९०
गोविन्दो मातुलो यस्य पिता यस्य धनंजयः ।
अभिमन्यू रणे शेते **नियतिः केन वार्यते** ॥ ९१ ॥
भगवन्तौ जगन्नेत्रे सूर्याचन्द्रमसावपि ।
पश्य गच्छत एवास्तं **नियतिः केन लङ्घ्यते** ॥ ९२ ॥
बुद्धिर्यस्य वलं तस्य **निर्बुद्धेस्तु कुतो वलम्** ।
पश्य सिंहो मदोन्मत्तः शशकेन निपातितः ॥ ९३ ॥

**नीचाश्रयो न कर्तव्यः कर्तव्यो महदाश्रयः।**
अजः सिंहप्रसादेन आरूढो गजमस्तके ॥ ९४ ॥

दोषाकरोपि कुटिलोपि कलङ्कितोपि
मित्रावसानसमये विहितोदयोपि ।
चन्द्रस्तथापि हरवल्लभतामुपैति
**नैवाश्रितेषु गुणदोषविचारणा स्यात्** ॥ ९५ ॥

यत्रास्ति लक्ष्मीर्विनयो न तत्र अभ्यागतो यत्र न तत्र लक्ष्मीः ।
उभौ च तौ यत्र दरिद्रता च **नैकत्र सर्वो गुणसंनिपातः**॥९६॥

आशैव राक्षसी पुंसामाशैव विषमञ्जरी ।
आशैव जीर्णमदिरा **नैराश्यं परमं सुखम्** ॥ ९७ ॥

## प

पिनाकफणिबालेन्दुभस्ममन्दाकिनीयुता ।
**पवर्गरचिता मूर्तिरपवर्गप्रदायिनी** ॥ १ ॥

विरला जानन्ति गुणान्विरलाः कुर्वन्ति निर्धनस्नेहम् ।
विरला रणेषु धीराः **परदुःखेनापि दुःखिता विरलाः** ॥२॥

**परोपदेशपाण्डित्यं** सर्वेषां सुकरं नृणाम् ।
धर्मे स्वीयमनुष्ठानं कस्यचित्सुमहात्मनः ॥ ३ ॥

**परोपदेशपाण्डित्ये** शिष्टाः सर्वे भवन्ति वै ।
विस्मरन्तीह शिष्टत्वं स्वकार्ये समुपस्थिते ॥ ४ ॥

**परोपदेशसमये जनाः सर्वेपि पण्डिताः ।**
तदनुष्ठानसमये मुनयोऽपि न पण्डिताः ॥ ५ ॥

मूले भुजङ्गैः शिखरे विहङ्गैः शाखाः प्लवङ्गैः कुसुमानि भृङ्गैः ।
आश्चर्यमेतत्खलु चन्दनस्य **परोपकाराय सतां विभूतयः**॥६॥

खलः सर्षपमात्राणि परच्छिद्राणि पश्यति ।
आत्मनो बिल्वमात्राणि **पश्यन्नपि न पश्यति** ॥ ७ ॥

परान्नं प्राप्य दुर्बुद्धे मा प्राणेषु दयां कुरु ।
**परान्नं दुर्लभं लोके** प्राणा जन्मनि जन्मनि ॥ ८ ॥

परसेवा सुखं हन्ति प्राणं हन्युः परस्त्रियः ।
**परान्नं सुकृतं हन्ति** ब्रह्मद्वेषे कुलक्षयः ॥ ९ ॥

**पञ्चमेऽहनि षष्ठे वा शाकं पचति यो गृहे ।**

अनृणी चाप्रवासी च स चिरं तत्र मोदते ॥ १० ॥

विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च **पण्डिताः समदर्शिनः** ॥ ११ ॥

अयममृतनिधानं नायकोऽप्योषधीना-
ममृतमयशरीरः कान्तियुक्तोऽपि चन्द्रः ।
भवति विगतरश्मिर्मण्डलं प्राप्य भानोः
**परसदननिविष्टः को लघुत्वं न याति** ॥ १२ ॥

परस्पराणि मर्माणि ये वदन्ति नराधमाः ।
**परस्परं क्षयं यान्ति वल्मीकोदरसर्पवत्** ॥ १३ ॥

**पत्रं पुष्पं फलं तोयं** यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ १४ ॥

उपकारोपि नीचानामपकारो हि जायते ।
**पयःपानं भुजङ्गानां केवलं विषवर्धनम्** ॥ १५ ॥

राजपत्नी गुरोः पत्नी मित्रपत्नी तथैव च ।
पत्नीमाता स्वस्य माता **पञ्चैता मातरः स्मृताः**॥१६॥

जनिता चोपनेता च यश्च विद्यां प्रयच्छति ।
अन्नदाता भयत्राता **पञ्चैते पितरः स्मृताः** ॥ १७ ॥

**पञ्चभिः सह गन्तव्यं** स्थातव्यं पञ्चभिः सह ।
पञ्चभिः सह वक्तव्यं न दुःखं पञ्चभिः सह ॥ १८ ॥

**परस्परं भावयन्तः** श्रेयः परमवाप्स्यथ ।
देवान्भावयतानेन ते देवा भावयन्तु वः ॥ १९ ॥

गच्छ सूकर भद्रं ते ब्रूहि सिंहो मया जितः ।
**पण्डिता एव जानन्ति सिंहसूकरयोर्बलम्** ॥२०॥

स्वगृहे पूर्ण आचारः परगेहे तदर्धकः ।
तदर्धकः परग्रामे **पथि सूत्रवदाचरेत्** ॥ २१ ॥

रत्नाकरः किं कुरुते स्वरत्नैर्विन्ध्याचलः किं करिभिः करोति ।
श्रीखण्डखण्डैर्मलयाचलः किं **परोपकाराय सतां विभूतयः**॥२२॥

पिबन्ति नद्यः स्वयमेव नाम्भः स्वयं न खादन्ति फलानि वृक्षाः ।
पयोमुचाम्भः क्वचिदस्ति पार्श्वं **परोपकाराय सतां विभूतयः**२३॥

**पथ्ये सति गदार्तस्य किमौषधिनिषेवणम् ।**
पथ्ये[1]ऽसति गदार्तस्य किमौषधिनिषेवणम् ॥ २४ ॥
अग्निर्देवो द्विजातीनां मुनीनां हृदि दैवतम् ।
**प्रतिमास्वल्पबुद्धीनां** सर्वत्र समदर्शिनाम् ॥ २५ ॥
**प्रवाहपतितं कार्यं** कुर्वन्नपि न लिप्यसे ।
बाह्ये सर्वत्र कर्तृत्वमावहन्नपि राघव ॥ २६ ॥
धर्मार्थं यस्य वित्तेहा वरं तस्य निरीहता ।
**प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्** ॥ २७ ॥
पौलस्त्यः कथमन्यदारहरणे दोषं न विज्ञातवा-
नक्षैश्चापि युधिष्ठिरेण रमता ज्ञातो न दोषो नु किम् ।
रामेणापि वने न हेमहरिणस्यासंभवो लक्षितः
**प्रत्यासन्नविपत्तिमूढमनसां प्रायो मतिः क्षीयते** २८
अमा पूर्णा गुरुं हन्ति शिष्यं हन्ति चतुर्दशी ।
उभयोरष्टमी हन्ति **प्रतिपत्पाठनाशिनी** ॥ २९ ॥
सा प्रकृत्यैव तन्वङ्गी त्वद्वियोगाच्च कर्शिता ।
**प्रतिपत्पाठशीलस्य विद्येव तनुतां गता** ॥ ३० ॥
अजायुद्धमृषिश्राद्धं **प्रभाते मेघडम्बरम् ।**
दम्पत्योः कलहश्चैव परिणामे न किंचन ॥ ३१ ॥
**प्रत्यक्षे गुरवः स्तुत्याः** परोक्षे मित्रबान्धवाः ।
कार्यान्ते दासिभृत्याश्च पुत्रो नैव मृताः स्त्रियः ॥ ३२ ॥
तुष्टे सति न लाभाय रुष्टे नाशाय नैव च ।
**प्रज्वालितानि शष्पाणि नाङ्गाराय न भस्मने** ॥ ३३ ॥
निर्वाणदीपे किमु तैलदानं चौरे गते वा किमु सावधानम् ।
वयोगते किं वनिताविलासः **पयोगते किं खलु सेतुबन्धः** ॥ ३४ ॥
**प्रथमे[2] नार्जिता विद्या** द्वितीये नार्जितं धनम् ।
तृतीये न तपस्तप्तं चतुर्थे किं करिष्यसि ॥ ३५ ॥

---

१ विनापि भेषजैर्व्याधिः पथ्यादेव निवर्तते । नतु पथ्यविहीनस्य भेषजानां शतैरपि । २ प्रथमवयसि.

**प्रयोजनमनुद्दिश्य न मन्दोपि प्रवर्तते ।**
करिष्यति विना कार्यं कथं यत्नं कृती नरः ॥ ३६ ॥

अश्वारूढः पयःपानं गजारूढश्च मैथुनम् ।
शिविकी मर्दनं चैव **पादचारी च भोजनम्** ॥ ३७ ॥

**पादाभ्यां न स्पृशेदग्निं न गुरुं ब्राह्मणं तथा ।**
न गां च न कुमारीं च न शिशुं न च देवताम् ॥ ३८ ॥

**पानीयं पानीयं शरदि वसन्ते च पानीयम् ।**
नादेयं नादेयं शरदि वसन्ते च नादेयम् ॥ ३९ ॥

न विद्या कारणं पुंसां दैवमेवात्र कारणम् ।
**पापाणस्य कुतो विद्या** केन देवलमाप्नुयात् ॥ ४० ॥

लालयेत्पञ्चवर्षाणि दशवर्षाणि ताडयेत् ।
**प्राप्ते तु षोडशे वर्षे पुत्रं मित्रवदाचरेत्** ॥ ४१ ॥

**प्राप्तव्यमर्थं लभते मनुष्यो** देवोपि तं लङ्घयितुं न शक्तः ।
तस्मान्न शोचामि न विस्मयो मे यदस्मदीयं नहि तत्परेषाम् ॥ ४२ ॥

कृष्ण त्वदीयपदपङ्कजपञ्जरान्ते
अद्यैव मे विशतु मानसराजहंसः ।
**प्राणप्रयाणसमये कफवातपित्तैः**
**कण्ठावरोधनविधौ स्मरणं कुतस्ते** ॥ ४३ ॥

घृष्टं घृष्टं पुनरपि पुनश्चन्दनं चारुगन्धं
छिन्नश्छिन्नः पुनरपि पुनः स्वादुमानिक्षुदण्डः ।
दग्धं दग्धं पुनरपि पुनः काञ्चनं कान्तवर्णं
**प्राणान्तेपि प्रकृतिविकृतिर्जायते नोत्तमानाम्** ॥ ४४ ॥

**प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते ।**
तपोनिश्चयसंयोगात्प्रायश्चित्तं प्रकीर्तितम् ॥ ४५ ॥

खल्वाटो दिवसेश्वरस्य किरणैः संतापितो मस्तके
वाञ्छन्देशमनातपं विधिवशाद्बिल्वस्य मूलं गतः ।
तत्राप्येकफलेन मूर्ध्नि पतता भग्नं सशब्दं शिरः
**प्रायो गच्छति यत्र भाग्यरहितस्तत्रापि यान्त्यापदः** ॥ ४६ ॥

कुटिला लक्ष्मीर्यत्र प्रभवति न सरस्वती वसति तत्र ।

**प्रायः श्वश्रूस्नुषयोर्न दृश्यते सौहृदं लोके** ॥ ४७ ॥

चिकीर्षिते कर्मणि चक्रपाणेर्नापेक्ष्यते तत्र सहायसंपत् ।
**पाञ्चालजायाः पटसंनिधाने मध्येसभं यन्न तुरी न वेमा**॥

**पात्रापात्रविवेकोस्ति** धेनुपन्नगयोरिव ।
तृणात्संजायते क्षीरं क्षीरात्संजायते विषम् ॥ ४९ ॥

**पिण्डेपिण्डे मतिर्भिन्ना** कुण्डे[1]कुण्डे नवं पयः ।
जाताजाता नवाचारा नवा वाणी मुखेमुखे ॥ ५० ॥

**पितृपूर्वार्जिता भूमिर्दरिद्रापि सुखावहा ।**
अपि स्वर्णमयी लङ्का न मे लक्ष्मण रोचते ॥ ५१ ॥

ग्रासोद्गलितसिक्थस्य का हानिः करिणो भवेत् ।
**पिपीलिका तु तेनैव सकुटुम्बोपजीवति** ॥ ५२ ॥

**पुस्तकं वनिता वित्तं परहस्तगतं गतम् ।**
यदि चेत्पुनरायाति नष्टं भ्रष्टं च खण्डितम् ॥ ५३ ॥

**पुस्तकेषु च या विद्या** [2]परहस्तेषु यद्धनम् ।
संग्रामे च गृहे सैन्यं त्रयं पुंसां विडम्बनम् ॥ ५४ ॥

**पुनरपि जननं पुनरपि मरणं** पुनरपि जननीजठरे शयनम् ।
इह संसारे खलु दुस्तारे कृपयापारे पाहि मुरारे ॥ ५५ ॥

उर्व्यां कोपि महीधरो लघुतरो दोर्भ्यां धृतो लीलया
तेन त्वं दिवि भूतले च सततं गोवर्धनोद्धारकः ।
त्वां त्रैलोक्यधरं वहामि कुचयोरग्रे न तद्गण्यते
किं वा केशव भाषणेन बहुना **पुण्यैर्यशो लभ्यते** ॥ ५६ ॥

पात्रे त्यागी गुणे रागी संविभागी च बन्धुषु ।
शास्त्रे बोद्धा रणे योद्धा **पुरुषः पञ्चलक्षणः** ॥ ५७ ॥

**पूर्वदत्तेषु या विद्या पूर्वदत्तेषु यद्धनम् ।**
**पूर्वदत्तेषु या भार्या** अग्रे धावति धावति ॥ ५८ ॥

## फ

कर्तव्योऽप्याश्रयः श्रेयान् **फलं भाग्यानुसारतः ।**

---

१ तुण्डेतुण्डे सरस्वती. २ जीवितं परसत्तया.

नीलकण्ठस्य कण्ठेऽपि वासुकिर्वायुभक्षकः ॥ १ ॥
पिता रत्नाकरो यस्य लक्ष्मीर्यस्य सहोदरी ।
शङ्खो भिक्षाटनं कुर्यात् **फलं भाग्यानुसारतः** ॥ २ ॥

## ब

स्वयं महेशः श्वशुरो नगेशः सखा धनेशस्तनयो गणेशः ।
तथापि भिक्षाटनमेव शंभोर्**बलीयसी केवलमीश्वरेच्छा** ॥१॥
भ्रमन्वनान्ते नवमञ्जरीषु न षट्पदो गन्धफलीमजिघ्रत् ।
सा किं न रम्या स च किं रन्ता **बलीयसी केवलमीश्वरेच्छा** २
वहौ विशुद्धामपि जानकीं तां जहौ वनान्ते किल रामचन्द्रः ।
सा किं न शुद्धा स च किं न वेत्ता **बलीयसी केवलमीश्वरेच्छा** ३

आत्मद्वेषाद्भवेन्मृत्युः परद्वेषाद्धनक्षयः ।
राजद्वेषाद्भवेन्नाशो **ब्रह्मद्वेषात्कुलक्षयः** ॥ ४ ॥
**बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।**
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ ५ ॥
**ब्रह्म सत्यं जगन्मिथ्या** जीवो ब्रह्मैव नापरः ।
अनेन वेद्यं सच्छास्त्रमिति वेदान्तडिण्डिमः ॥ ६ ॥
न विषं विषमित्याहुर्**ब्रह्मस्वं विषमुच्यते ।**
विषमेकाकिनं हन्ति **ब्रह्मस्वं पुत्रपौत्रकम्** ॥ ७ ॥
नमस्ते तव शीलस्य नमः केदारखण्डनम् ।
सहस्राणां शतं नास्ति **वण्डपुच्छो ? न दृश्यते** ॥ ८ ॥
दाने तपसि शौर्ये वा विज्ञाने विनये नये ।
विस्मयो नहि कर्तव्यो **बहुरत्ना वसुन्धरा** ॥ ९ ॥
मात्रा स्वस्रा दुहित्रा वा नोऽविविक्तासनो[१] भवेत् ।
**बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति** ॥ १० ॥
शुकवद्भाषणं कुर्यात् **बकवद्ध्यानमाचरेत् ।**
अजवच्चर्वणं कुर्याद्गजवत्स्नानमाचरेत् ॥ ११ ॥
दुर्बलस्य बलं राजा **बालानां रोदनं बलम् ।**

---

१ नैकशय्यासनो भवेत्.

बलं मूर्खस्य मौनत्वं चोराणामनृतं बलम् ॥ १२ ॥
पक्षिणां बलमाकाशो मत्स्यानामुदकं बलम् ।
दुर्बलस्य बलं राजा **बालानां रोदनं बलम्** ॥ १३ ॥
**बालस्तावत्क्रीडासक्तस्तरुणस्तावत्तरुणीरक्तः ।**
वृद्धस्तावच्चिन्तामग्नः परे ब्रह्मणि कोऽपि न लग्नः ॥ १४ ॥
**बालादपि ग्रहीतव्यं युक्तमुक्तं मनीषिभिः ।**
रवेरविषये किं न प्रदीपस्य प्रकाशनम् ॥ १५ ॥
अस्माकं बदरीचक्रं बदरी च तवाङ्गने ।
**बादरायणसंबन्धाद्यूयं यूयं वयं वयम्** ॥ १६ ॥
**बालसखित्वमकारणहास्यं स्त्रीषु विवादमसज्जनसेवा ।**
गर्दभयानमसंस्कृतवाणी षड्भिर्नो लघुतामुपयाति ॥ १७ ॥
किं करोति नरः प्राज्ञः प्रेर्यमाणः स्वकर्मणा ।
प्रागेव हि मनुष्याणां **बुद्धिः कर्मानुसारिणी** ॥ १८ ॥
कर्मायत्तं फलं पुंसां **बुद्धिः कर्मानुसारिणी ।**
तथापि सुधिया भाव्यं सुविचार्यैव कुर्वता ॥ १९ ॥
सोपसर्गां यथा सिद्धिं **बुद्धिं सकलुषामिव ।**
अभूतेनापवादेन कीर्तिं निपतितामिव ॥ २० ॥
एकं हन्यान्न हन्याद्वा शरो मुक्तो धनुष्मता ।
**बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजकम्** ॥ २१ ॥
जागर्ति लोको ज्वलति प्रदीपः सखीजनः पश्यति कौतुकं मे ।
मुहूर्तमात्रं कुरु कान्त धैर्यं **बुभुक्षितः किं द्विकरेण भुङ्क्ते** ॥२२॥

## भ

विपत्तौ किं विषादेन संपत्तौ हर्षेणेन किम् ।
**भवितव्यं भवत्येव** कर्मणामीदृशी गतिः ॥ १ ॥
**भवितव्यं भवत्येव** नारिकेलफलाम्बुवत् ।
गन्तव्यं गतमित्याहुर्गज[1]भुक्तकपित्थवत् ॥ २ ॥
चतुरं तुरगं परिनर्तयतः पथि पौरजनान् परिमर्दयतः ।

१. कपित्थांतर्गतः कीटो गज इत्यभिधीयते.

नहि ते भुजभाग्यभवो विभवो **भगिनीभगभाग्यभवो विभवः**[१]

भिक्षो मांसनिषेवणं किमुचितं किं तेन मद्यंविना
मद्यं चापि तव प्रियं प्रियमहो वाराङ्गनाभिः सह ।
वारस्त्रीरतये कुतस्तव धनं द्यूतेन चौर्येण वा
चौर्यद्यूतपरिश्रमोऽपि भवतो **भ्रष्टस्य का वा गतिः** ॥ ४ ॥

**भगवद्गीता किंचिदधीता** गङ्गाजललवकणिका पीता ।
सकृदपि यस्य मुरारिसमर्चा तस्य करोति यमोपि न चर्चा ॥ ५ ॥

मीमांसा पठिता न यैरुपनिषन्नैव श्रुता तत्त्वतः
श्रीमच्छांकरभाष्यतो भगवती गीताप्यधीता न यैः ।
सिद्धान्तापगतं शिरोमणिमतं ज्ञात्वापि किंचित्ततो
**भट्टाचार्यपदं गताः कथमहो लज्जां लभन्ते न ते** ॥६॥

**भार्या रूपवती शत्रुः** पुत्रः शत्रुरपण्डितः ।
ऋणकर्ता पिता शत्रुर्माता च व्यभिचारिणी ॥ ७ ॥

**भाग्यवन्तं प्रसूयेथा** मा शूरं मा च पण्डितम् ।
शूराश्च कृतविद्याश्च वने तिष्ठन्ति मत्सुताः ॥ ८ ॥

**भारते सारमुद्योगं** तत्रापि विदुरोक्तयः ।
सनत्सुजातं तत्रापि तत्र श्लोकचतुष्टयम् ॥ ९ ॥

"स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।
इति भारतमाख्यानं कृपया मुनिना कृतम् ॥"
**भारतव्यपदेशेन ह्याम्नायार्थश्च दर्शितः ।**
दृश्यते यत्र धर्मादीन्स्त्रीशूद्रादिभिरप्युत ॥ १० ॥

मज्जत्वम्भसि यातु मेरुशिखरं शत्रूञ्जयत्वाहवे
वाणिज्यं कृषिसेवनादिसकलं सर्वाः कलाः शिक्षतु ।
आकाशं विपुलं प्रयातु खगवत्कृत्वा प्रयत्नं परं
नाभाव्यं भवतीह कर्मवशतो **भाव्यस्य वा शं कुतः** ॥११॥

अथाङ्गराजादवतार्य चक्षुर्याहीति जन्यामवदत्कुमारी ।
नासौ न काम्यो नच वेद सम्यग्द्रष्टुं न सा **भिन्नरुचिर्हि लोकः**॥१२

---

१. भगभाग्य.

प्रतिक्षणे मृत्युहरं निजायुर्न वेद मूढो विषयेषु सक्तः ।
**सैको यथा व्यालमुखे प्रविष्टः स मक्षिकां द्वेष्टि विनष्टबुद्धिः** ॥ १३ ॥

**भोजनान्ते विषं वारि** भोजने चामृतं परम् ।
अजीर्णे भेषजं वारि जीर्णे वारि बलप्रदम् ॥ १४ ॥

खण्डे खण्डे च पाण्डित्यं क्रयक्रीतं च मैथुनम् ।
**भोजनं च पराधीनं** त्रयं पुंसां विडम्बनम् ॥ १५ ॥

वृद्धकाले मृता भार्या बन्धुहस्तगतं धनम् ।
**भोजनं च पराधीनं** त्रयं पुंसां विडम्बनम् ॥ १६ ॥

दिनान्ते च पिबेद्दुग्धं निशान्ते च पिबेत्पयः ।
**भोजनान्ते पिबेत्तक्रं** किं वैद्यस्य प्रयोजनम् ॥ १७ ॥

शर्यातिं च सुकन्यां च च्यवनं शुक्रमश्विनौ ।
**भोजनान्ते क्षिपेद्वारि तस्य चक्षुर्न नश्यति** ॥ १८ ॥

दर्भहीना तु या संध्या तिलहीनं तु तर्पणम् ।
संकल्पेन विना कर्म **भोजनं दक्षिणां विना** ॥ १९ ॥

## म

**मनो हि हेतुः सर्वेषामिन्द्रियाणां प्रवर्तने ।**
शुभाशुभास्ववस्थासु तच्च मे सुव्यवस्थितम् ॥ १ ॥

**मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।**
गुणेषु सक्तं बन्धाय मोक्षाय तपसि स्थितम् ॥ २ ॥

दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं पिबेज्जलम् ।
शास्त्रपूतां वदेद्वाणीं **मनःपूतं समाचरेत्** ॥ ३ ॥

श्रुतिर्विभिन्ना स्मृतयश्च भिन्ना नैको मुनिर्यस्य वचः प्रमाणम् ।
धर्मस्य तत्त्वं निहितं गुहायां **महाजनो येन गतः स पन्थाः** ॥४॥

**मरणान्तानि वैराणि** निवृत्तं नः प्रयोजनम् ।
क्रियतामस्य संस्कारो ममाप्येष यथा तव ॥ ५ ॥

**मर्कटस्य सुरापानं** ततो वृश्चिकदंशनम् ।
तन्मध्ये भूतसंचारो यद्वातद्वा भविष्यति ॥ ६ ॥

**मनस्येकं वचस्येकं** कर्मण्येकं महात्मनाम् ।

मनस्यन्यद्वचस्यन्यत्कार्ये चान्यद्दुरात्मनाम् ॥ ७ ॥

चापाकृति धनुर्मासे मकरे कुण्डलाकृति ।
कुम्भे शीतमशीतं वा मीने शीतनिवारणम् ॥ ८ ॥

दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ ९ ॥

ममेति बध्यते जन्तुर्नममेति च मुच्यते ।
बन्धाय विषयासक्तं मुक्त्यै निर्विषयं मनः ॥ १० ॥

मन्युप्रहरणा विप्रा राजानः शस्त्रपाणयः ।
शस्त्रमेकाकिनं हन्ति विप्रमन्युः कुलत्रयम् ॥ ११ ॥

मन्युप्रहरणा विप्राश्चक्रप्रहरणो हरिः ।
चक्रात्तीव्रतरो मन्युस्तस्माद्विप्रं न कोपयेत् ॥ १२ ॥

अनाहूताः स्वयं यान्ति रसास्वादविलोलुपाः ।
निवारिता न गच्छन्ति मक्षिका इव भिक्षुकाः ॥ १३ ॥

कस्यचित्किमपि नो हरणीयं मर्मवाक्यमपि नोच्चरणीयम् ।
श्रीपतेः पदयुगं स्मरणीयं लीलया भवजलं तरणीयम् ॥ १४ ॥

वयमिह परितुष्टा वल्कलैस्त्वं दुकूलैः
सम इह परितोषो निर्विशेषो विशेषः ।
स तु भवति दरिद्री यस्य तृष्णा विशाला
मनसि च परितुष्टे कोऽर्थवान्को दरिद्री ॥ १५ ॥

इक्षुदण्डास्तिलाः क्षुद्राः कान्ता हेम च मेदिनी ।
चन्दनं दधि ताम्बूलं मर्दनं गुणवर्धनम् ॥ १६ ॥

मनःकृतं कृतं राम न शरीरकृतं कृतम् ।
मनो हि जगतां कर्तृ मनो हि पुरुषः स्मृतः ॥ १७ ॥

मनसैव कृतं पापं न शरीरकृतं कृतम् ।
येनैवालिङ्गिता कान्ता तेनैवालिङ्गिता सुता ॥ १८ ॥

कस्तूरी जायते कस्मात्को हन्ति करिणां शतम् ।
किं कुर्यात्कातरो युद्धे मृगात्सिंहः पलायनम् ॥ १९ ॥

अयं मृगः समायाति त्वरितैस्त्वरितैः पदैः ।
अतो गच्छस्व शीघ्रं त्वं **मृगात्सिहः पलायते** ॥ २० ॥

येषां न विद्या न तपो दानं ज्ञानं न शीलं न गुणो न धर्मः ।
ते मृत्युलोके भुवि भारभूता **मनुष्यरूपेण मृगाश्चरन्ति** ॥२१॥

तारुण्ये च मृता भार्या पातकं किमतः परम् ।
**मनसा चिन्तितं कार्यं दैवमन्यत्तु चिन्तयेत्** ॥ २२॥

**मनसा चिन्तितं कार्यं वाचा नैव प्रकाशयेत् ।**
मन्त्ररक्षणगूढात्मा कार्यसिद्धिं प्रकाशयेत् ॥ २३ ॥

**मनसा चिन्तितं कार्यं दैवमन्यत्तु चिन्तयेत् ।**
राजकन्याप्रसङ्गेन गुरुर्भवति भिल्लवः ? ॥ २४ ॥

उपमा कालिदासस्य भारवेरर्थगौरवम् ।
दण्डिनः पदलालित्यं **माघे सन्ति त्रयो गुणाः** ॥ २५ ॥

अधमा धनमिच्छन्ति धनमानौ च मध्यमाः ।
उत्तमा मानमिच्छन्ति **मानो हि महतां धनम्** ॥ २६ ॥

रे रे चातक सावधानमनसा मित्र क्षणं श्रूयतां
अम्भोदा बहवो वसन्ति गगने सर्वेऽपि नैतादृशाः ।
केचिद्वृष्टिभिरार्द्रयन्ति धरणीं गर्जन्ति केचिद्वृथा
यं यं पश्यसि तस्य तस्य पुरतो **मा ब्रूहि दीनं वचः** ॥२७॥

तावत्सर्वगुणालयः पटुमतिः साधुः सतां वल्लभः
शूरः सच्चरितः कलङ्करहितो मानी कृतज्ञः कविः ।
यावन्निष्ठुरवज्रपातसदृशो देहीति नो भाषते
तस्माद्वाक्यमिदं मम शृणु सखे **मा ब्रूहि दीनं वचः** ॥२८॥

**मुखवर्जं तु गौः शुद्धा** मार्जारश्चाश्रमे शुचिः ।
शय्या भार्या शिशुर्वस्त्रमुपवीतं कमण्डलुः ॥ २९ ॥

**मुख्यमेकं पुरस्कृत्य शून्यात्मानोऽपि साधकाः ।**
भवन्ति तं विना नैव यथा संख्याङ्कबिन्दवः ॥ ३० ॥

शक्यो वारयितुं जलेन हुतभुक् छत्रेण सूर्यातपो
नागेन्द्रो निशिताङ्कुशेन समदो दण्डेन गोगर्दभौ ।

व्याधिर्भेषजसंग्रहैश्च विविधैर्मन्त्रप्रयोगैर्विषं
सर्वस्यौषधमस्ति शास्त्रविहितं **मूर्खस्य नास्त्यौषधम्** ॥३१॥
लुब्धमर्थेन गृह्णीयात्स्तब्धमञ्जलिकर्मणा ।
**मूर्खं छन्दानुरोधेन** याथातथ्येन पण्डितम् ॥ ३२ ॥
मूर्खत्वं हि सखे ममापि रुचिरं तस्मिन्यदष्टौ गुणा
निश्चिन्तो बहुभोजनेष्वभिरुची रात्रौ दिवा सुप्यते ।
कार्याकार्यविचारणान्धबधिरो मानापमानौ समौ
कृत्वा सर्वजनस्य मूर्ध्नि पदं **मूर्खः सुखं जीवति** ॥३३॥
तैलाद्रक्षेज्जलाद्रक्षेद्रक्षेच्छिथिलबन्धनात् ।
**मूर्खहस्ते न दातव्यमेवं वदति पुस्तकम्** ॥ ३४ ॥
**मूर्खस्य पञ्च चिह्नानि** गर्वी दुर्वचनी तथा ।
हठी चाप्रियवादी च परोक्तं नैव मन्यते ॥ ३५ ॥
आत्मनो मुखदोषेण बध्यन्ते शुकसारिकाः ।
बकास्तत्र न बध्यन्ते **मौनं सर्वार्थसाधकम्** ॥ ३६ ॥
मुञ्च मुञ्च महासर्प मा मुञ्च भुजगोत्तम ।
उभयोः पतनं दृष्ट्वा **मौनं सर्वार्थसाधनम्** ॥ ३७ ॥
शैले शैले न माणिक्यं **मौक्तिकं न गजे गजे** ।
साधवो न हि सर्वत्र चन्दनं न वने वने ॥ ३८ ॥
मौखर्यं लाघवकरं **मौनमुन्नतिकारकम्** ।
मुखरं नूपुरं पादे कण्ठे हारो विराजते ॥ ३९ ॥
**मौने मौनी गुणिनि गुणवान्** पण्डिते पण्डितोऽसौ
दीने दीनः सुखिनि सुखवान्भोगिनि प्राप्तभोगः ।
मूर्खे मूर्खो युवतिषु युवा वाग्मिषु प्रौढवाग्मी
धन्यः कोऽपि त्रिभुवनजयी योऽवधूतेऽवधूतः ॥ ४० ॥
**मौनं कालविलम्बश्च** प्रयाणं भूमिदर्शनम् ।
भृकुट्यन्यमुखी वार्ता नकारः पञ्चविधः स्मृतः ॥ ४१ ॥

## य

मासि मासि समा ज्योत्स्ना पक्षयोरुभयोरपि ।
तत्रैव शुक्लपक्षोऽभूत् **यशः पुण्यैरवाप्यते** ॥ १ ॥

मत्स्यादयोऽपि जानन्ति नीरक्षीरविवेचनम् ।
प्रसिद्धमेव हंसस्य **यशः पुण्यैरवाप्यते** ॥ २ ॥
यस्य कस्य तरोर्मूलं येन केनापि मिश्रितम् ।
यस्मै कस्मै प्रदातव्यं **यद्वा तद्वा भविष्यति** ॥ ३ ॥
मर्कटस्य सुरापानं तस्य वृश्चिकदंशनम् ।
तन्मध्ये भूतसंचारो **यद्वा तद्वा भविष्यति** ॥ ४ ॥
विवाहोऽर्थश्च मरणमन्नं जननमेव च ।
कण्ठे वध्वा दृढं सूत्रं **यत्रस्थं तत्र नीयते** ॥ ५ ॥
**यत्र वैदिकास्तत्र पण्डितो** यत्र पण्डितास्तत्र वैदिकः ।
यत्र नोभयं तत्र चोभयं यत्र चोभयं तत्र नोभयम् ॥ ६ ॥
**यथा व्यालगलस्थोपि भेको दंशानपेक्षते ।**
तथा कालाहिना ग्रस्तो लोको भोगानशाश्वतान् ॥ ७ ॥
राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः ।
लोकास्तदनुवर्तन्ते **यथा राजा तथा प्रजाः** ॥ ८ ॥
यथा देशस्तथा भाषा **यथा राजा तथा प्रजाः ।**
यथा भूमिस्तथा तोयं **यथा बीजं तथाङ्कुरः** ॥ ९ ॥
स्वधर्मरूपो राजेन्द्रो दयारूपेण मन्त्रिणः ।
सेवकाः साधुरूपेण **यथा राजा तथा प्रजाः** ॥ १० ॥
राजा राक्षसरूपेण व्याघ्ररूपेण मन्त्रिणः ।
सेवकाः साधुरूपेण **यथा राजा तथा प्रजाः** ॥ ११ ॥
अश्विनी सूयते वत्सं कामधेनुस्तुरंगमम् ।
तथैव सागरो वह्नि **यथा राजा तथा प्रजाः** ॥ १२ ॥
यथा चित्ते तथा वाचि **यथा वाचि तथा क्रियाः ।**
चित्ते वाचि क्रियायां च साधूनामेकरूपता ॥ १३ ॥
पठकः पाठकश्चैव ये चान्ये शास्त्रवाचकाः ।
सर्वे व्यसनिनो ज्ञेया **यः क्रियावान्स पण्डितः** ॥ १४ ॥
**यतः सत्यं ततो धर्मो** यतो धर्मस्ततो धनम् ।
यतो रूपं ततः शीलं यतो नागास्ततो जयः ॥ १५ ॥

जयोऽस्तु पाण्डुपुत्राणां येषां पक्षे जनार्दनः ।
यतः कृष्णस्ततो धर्मो यतो धर्मस्ततो जयः ॥ १६ ॥

अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसंभवः ।
यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ १७ ॥

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ १८ ॥

यस्य वर्णस्य यो राजा स वर्णः सुखमेधते ।
जामदग्न्येन रामेण ब्राह्मणा भूभुजः कृताः ॥ १९ ॥

य(ए)ष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥ २० ॥

यस्मिन्देशे य आचारः स्थाने स्थाने यथा स्थितिः ।
तथैव व्यवहर्तव्यं पारम्पर्यागतो विधिः ॥ २१ ॥

यः स्वभावो हि यस्य स्यात्तस्यासौ दुरतिक्रमः ।
श्वा यदि क्रियते राजा स किं नाश्नात्युपानहम् ॥ २२ ॥

यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।
तत्सुखं सात्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥ २३ ॥

यद्भावि तद्भवत्येव यन्न भावि न तद्भवेत् ।
इति निश्चितबुद्धीनां न चिन्ता बाधते क्वचित् ॥ २४ ॥

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
दैवं प्रधानमिति कापुरुषा वदन्ति ।
दैवं विहाय कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥ २५ ॥

उपसर्गेऽन्यचक्रे च दुर्भिक्षे च भयावहे ।
असाधुजनसंसर्गे यः पलायेत जीवति ॥ २६ ॥

यदृच्छालाभसंतुष्टो द्वन्द्वातीतो विमत्सरः ।
समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते ॥ २७ ॥

अष्टादशापि स्मृतयो वदन्ति **यस्यापराधः खलु तस्य दण्डः।**
यस्यापराधः खलु नाभिमूले शिरः कुतो मुण्डयते मृगाक्षी ॥ २८ ॥

दीपो भक्षयते ध्वान्तं कज्जलं च प्रसूयते।
**यथान्नं भक्षयेन्नित्यं जायते तादृशी प्रजा** ॥ २९ ॥

**यः समुत्पतति क्रोधं क्षमयैव निरस्यति।**
यथोरगस्त्वचं जीर्णां स वै पुरुष उच्यते ॥ ३० ॥

**यभस्व नित्यं यदि शक्तिरस्ति चे-**
**द्दिनेदिने गच्छति नाथ यौवनम्।**
मृताय को दास्यति पिण्डसंनिधौ
तिलोदकैः सार्धमलोमशं भगम् ॥ ३१ ॥

**यस्य आशिष आशास्ते न स भक्तः स वै वणिक्।**
आशासानो न वै भृत्यः स्वामिन्याशिष आत्मनः ॥ ३२ ॥

**यदभावि न तद्भावि भावि चेन्न तदन्यथा।**
इति मत्वा नरो विद्वान्निश्चिन्तो भवति ध्रुवम् ॥ ३३ ॥

सर्वं[1] त्वमायतीयुक्तं भाषसे प्राज्ञसंमतम्।
न चोत्सहे सुतं त्यक्तुं **यतो धर्मस्ततो जयः** ॥ ३४ ॥

**यथैकेन न हस्तेन तालिका संप्रपद्यते।**
तथोद्यमपरित्यक्तं कर्म नोत्पादयेत्फलम् ॥ ३५ ॥

**यस्य देवस्य यद्रूपं तथा भूषणवाहनम्।**
तद्वदेव हि तच्छक्तिरसुरान्योद्धुमाययौ ॥ ३६ ॥

**यद्ददाति यदश्नाति तदेव धनिनो धनम्।**
अन्ये मृतस्य क्रीडन्ति दारैरपि धनैरपि ॥ ३७ ॥

मासि मासि गृहस्थस्य पक्षे पक्षे च यज्वनाम्।
ऋतावृतौ यतीनां च **यथेच्छं ब्रह्मचारिणः** ॥ ३८ ॥

मन्त्रे तीर्थे द्विजे देवे दैवज्ञे भेषजे गुरौ।
**यादृशीं भावनां कुर्यात्सिद्धिर्भवति तादृशी** ॥ ३९ ॥

दृष्ट्वा यतिर्यति सद्यो वैद्यो वैद्यं नटं नटः।
**याचको याचकं दृष्ट्वा श्वानवद्गुर्गुरायते** ॥ ४० ॥

---

१ भारते उद्योगपर्वणि.

महापातकसंप्राप्ते प्रायश्चित्तविवर्जिते ।
**याचयेच्छ्रोत्रियस्यान्नं तदभावे जलं पिबेत्** ॥ ४१ ॥

व्याघ्रस्तुष्यति कानने सुगहनां सिंहो गुहां सेवते
हंसोऽह्नाय च पद्मिनीं कुसुमितां गृध्रः श्मशानस्थले ।
साधुः सत्कृतिसाधुमेव भजते नीचोपि नीचं जनं
**या यस्य प्रकृतिः स्वभावजनिता केनापि न त्यज्यते** ४२

काकः पद्मवने रतिं न कुरुते हंसो न कूपोदके
मूर्खः सज्जनसंगमे न रमते दासो न सिंहासने ।
कुस्त्री सज्जनसंगमे न रमते नीचं जनं सेवते
**या यस्य प्रकृतिः स्वभावजनिता केनापि न त्यज्यते** ४३

स्यादत्यन्तनिरक्षरः क्षितिपतिः श्रीकारमात्राश्रया-
न्मन्त्री तत्कथितार्थलेखनपरस्तत्सेवको जायते ।
अध्येता तदगारमेव भजते विद्वांस्तु तं याचते
**यावान्यस्य गिरा समं परिचयस्तावद्विदूरे श्रियः**॥४४॥

मृत्युबुद्धिमतापोह्यो **यावद्बुद्धिबलोदयम्** ।
यद्यसौ न निवर्तेत नापराधोऽस्ति देहिनः ॥ ४५ ॥

**याममध्ये न भोक्तव्यं द्वियामं नैव लङ्घयेत्** ।
याममध्ये रसोत्पत्तिरत ऊर्ध्वं रसक्षयः ॥ ४६ ॥

कन्यागते सवितरि तिष्ठन्ति पितरो गृहे ।
शून्यं प्रेतपुरं तत्र **यावद्वृश्चिकदर्शनम्** ॥ ४७ ॥

**यावद्वित्तोपार्जनसक्तस्तावन्निजपरिवारो रक्तः** ।
पश्चाज्जर्जरभूते देहे वार्तां कोपि न पृच्छति गेहे ॥ ४८ ॥

विशाखान्तं गता मेघाः प्रसवान्तं हि यौवनम् ।
प्रणामान्तः सतां कोपो **याचनान्तं हि गौरवम्** ॥ ४९ ॥

**युक्तियुक्तमुपादेयं वचनं बालकादपि** ।
विदुषापि सदा ग्राह्यं वृद्धादपि न दुर्वचः ।
( अन्यत्तृणमिव त्याज्यमप्युक्तं पद्मजन्मना ) ॥ ५० ॥

घटं भिन्द्यात्पटं छिन्द्यात्कुर्याद्रासभरोहणम् ।
**येन केन प्रकारेण प्रसिद्धः पुरुषो भवेत्** ॥ ५१ ॥

सज्वरो विज्वरो वापि पित्तलः परिभुञ्जयेत् ।
**ये गुणा लङ्घने प्रोक्तास्ते गुणा लघुभोजने** ॥ ५२ ॥
निर्वाते ये गुणाः प्रोक्तास्ते गुणाः कर्णबन्धने ।
**ये गुणा लङ्घने प्रोक्तास्ते गुणा लघुभोजने** ॥ ५३ ॥
अतीव बलहीनं हि लङ्घनं नैव कारयेत् ।
**ये गुणा लङ्घने प्रोक्तास्ते गुणा लघुभोजने** ॥ ५४ ॥
युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य **योगो भवति दुःखहा** ॥ ५५ ॥
शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम्[1] ।
वार्धक्ये मुनिवृत्तीनां **योगेनान्ते तनुत्यजाम्**[2] ॥ ५६ ॥
अमन्त्रमक्षरं नास्ति नानौषधि वनस्पतिः ।
अयोग्यः पुरुषो नास्ति **योजकस्तत्र दुर्लभः** ॥ ५७ ॥
**यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।**
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ ५८ ॥
**यो यत्र कुशलः कार्ये तत्र तं विनियोजयेत् ।**
कार्येष्वदृष्टकर्मा यः शास्त्रज्ञोऽपि विमुह्यति ॥ ५९ ॥
बालत्वे च मृता माता वृद्धत्वे च मृताः सुताः ।
**यौवने च मृता भार्या पातकं किमतः परम्** ॥ ६० ॥

## ऋ

भस्मीभूतस्य देहस्य पुनरागमनं कुतः ।
तस्मात्सर्व[3]प्रयत्नेन **ऋणं कृत्वा घृतं पिबेत्** ॥ १ ॥
**ऋणकर्ता पिता** शत्रुर्माता च व्यभिचारिणी ।
अविनीता रिपुर्भार्या पुत्रः शत्रुरपण्डितः ॥ २ ॥
**ऋणानुबन्धरूपेण पशुपत्नीसुतालयाः ।**
ऋणक्षये विनश्यन्ति ऋणादौ प्रभवन्ति च ॥ ३ ॥

---

१ यौवने दारसंग्रहम्. २ योगेनान्ते तनुं त्यजेत्. ३ यावज्जीवं सुखं जीवेत्.

**ऋषीणां च नदीनां च कुलानां च महात्मनाम् ।**
प्रभावो नाधिगन्तव्यः स्त्रीणां दुश्चरितस्य च ॥ ४ ॥
भस्मना शुध्यते कांस्यं ताम्रमाम्लेन शुध्यति ।
**रजसा शुध्यते नारी** नदी वेगेन शुध्यति ॥ ५ ॥
**रङ्कं करोति राजानं राजानं रङ्कमेव च ।**
धनिनं निर्धनं चैव निर्धनं धनिनं तथा ॥ ६ ॥
अन्नं संप्रोक्ष्य गायत्र्या सत्यं त्वर्तेति मन्त्रः ।
**ऋतं त्वेति च सायं तु परिषिञ्चेत्प्रदक्षिणम्** ॥ ७ ॥
रामो राजमणिः सदा विजयते रामं रमेशं भजे
रामेणाभिहता निशाचरचमू **रामाय तस्मै नमः ।**
रामान्नास्ति परायणं परतरं रामस्य दासोऽस्म्यहं
रामे चित्तलयः सदा भवतु मे भो राम मामुद्धर ॥ ८ ॥
उत्सवे व्यसने चैव दुर्भिक्षे शत्रुविग्रहे ।
**राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः** ॥ ९ ॥
**राजा राष्ट्रकृतं पापं** राज्ञः पापं पुरोहितः ।
भर्ता च स्त्रीकृतं पापं शिष्यपापं गुरुस्तथा ॥ १० ॥
**राजसेवा मनुष्याणामसिधारावलेहनम् ।**
पञ्चाननपरिष्वङ्गो व्यालीवदनचुम्बनम् ॥ ११ ॥
कालो वा कारणं राज्ञो राजा वा कालकारणम् ।
इति ते संशयो मा भूत् **राजा कालस्य कारणम्** ॥१२॥
काके शौचं द्यूतकारे च सत्यं क्लीबे धैर्यं मद्यपे तत्त्वचिन्ता ।
सर्पे शान्तिः स्त्रीषु कामोपशान्ती **राजा मित्रं केन दृष्टं श्रुतं वा**१३
बालार्को यज्ञधूमश्च बालस्त्री निर्झरोदकम् ।
आयुष्यवर्धकं नित्यं **रात्रौ क्षीरान्नभोजनम्** ॥ १४ ॥
माता यदि विषं दद्यात्पिता विक्रीयते सुतम् ।
**राजा हरति सर्वस्वं शरणं कं व्रजेत्तदा** ॥ १५ ॥
अभ्रच्छन्दं विशाखान्तं प्रसूत्यन्तं च यौवनम् ।
**राज्यान्तं नरकं** तद्वद्याचनान्तं हि गौरवम् ॥ १६ ॥

गगनं गगनाकारं सागरः सागरोपमः ।
**रामरावणयोर्युद्धं रामरावणयोरिव** ॥ १७ ॥

**रिक्तपाणिर्न पश्येत राजानं देवतां गुरुम् ।**
दैवज्ञं पुत्रकं मित्रं फलेन फलमादिशेत् ॥ १८ ॥

आपद्गतं हससि किं द्रविणान्ध मूढ
लक्ष्मीः स्थिरा न भवतीति किमत्र चित्रम् ।
एतान्प्रपश्यसि घटाञ्जलयन्त्रचक्रे
**रिक्ता भवन्ति भरिता भरिताश्च रिक्ताः** ॥ १९ ॥

**रेवातीरे तपः कुर्यात्** मरणं जाह्नवीतटे ।
दानं दद्यात्कुरुक्षेत्रे तत्सर्वं गौतमीतटे ॥ २० ॥

## ल

हरिणापि हरेणापि ब्रह्मणापि सुरैरपि ।
**ललाटलिखिता रेखा परिमार्ष्टुं न शक्यते** ॥ १ ॥

**लब्धप्रतिष्ठाः प्रथमं** यूयं किं बलवत्तरैः ।
अपवादैरिवोत्सर्गाः कृतव्यावृत्तयः परैः ॥ २ ॥

**लोभमूलानि पापानि** व्याधयो रसमूलकाः ।
स्नेहमूलानि दुःखानि त्रीणि त्यक्त्वा सुखी भव ॥ ३ ॥

**लोभमूलानि पापानि लाभाल्लोभो विवर्धते ।**
त्रिमाषघटितं कार्यं त्रिकोट्यापि न पूर्यते ॥ ४ ॥

**लोभाविष्टो नरो वित्तं वीक्षते नैव चापदम् ।**
दुग्धं पश्यति मार्जारो यथा न लगुडाहतिम् ॥ ५ ॥

यद्यपि स्यात्स्वयं ब्रह्मा त्रैलोक्याकर्षणक्षमः ।
तथापि **लौकिकाचारं मनसापि न लङ्घयेत्** ॥ ६ ॥

## व

कैवर्तकर्कशकरग्रहणच्युतोऽपि
जालान्तरे निपतितः शफरो वराकः ।
दैवात्ततो विगलितो गिलितो बकेन
**वक्रे विधौ वद कथं व्यवसायसिद्धिः** ॥ १ ॥

कर्मणो हि प्रधानत्वं किं कुर्वन्ति शुभा ग्रहाः ।
**वसिष्ठदत्तलग्नोऽपि रामः किं भ्रमते वनम्** ॥ २ ॥
शतेषु जायते शूरः सहस्रेषु च पण्डितः ।
**वक्ता दशसहस्रेषु** दाता भवति वा न वा ॥ ३ ॥
**वयसि गते कः कामविकारः** शुष्के नीरे कः कासारः ।
क्षीणे वित्ते कः परिवारो ज्ञाते तत्त्वे कः संसारः ॥ ४ ॥
**वचस्तत्रैव वक्तव्यं यत्रोक्तं सफलं भवेत् ।**
स्थायीभवति चात्यन्तं रङ्गः शुक्लपटे यथा ॥ ५ ॥
अन्यक्षेत्रे कृतं पापं पुण्य क्षेत्रे विनश्यति ।
पुण्यक्षेत्रे कृतं पापं **वज्रलेपो भविष्यति** ॥ ६ ॥
अपृच्छं पुत्रदारादींस्तैरुक्तोऽहं रघूत्तम ।
पापं तवैव तत्सर्वं **वयं तु फलभागिनः** ॥ ७ ॥
अन्यैः साकं विरोधेन **वयं पञ्चोत्तरं शतम् ।**
परस्परविरोधेन वयं पञ्च च ते शतम् ॥ ८ ॥
प्रियवाक्यप्रदानेन सर्वे तुष्यन्ति जन्तवः ।
तस्मात्तदेव वक्तव्यं **वचने का दरिद्रता** ॥ ९ ॥
हस्तादपि न दातव्यं गृहादपि न दीयते ।
परोपकरणार्थाय **वचने का दरिद्रता** ॥ १० ॥
न शरन्मेघवत्कार्यं **वृथैव घनगर्जितम् ।**
परस्यार्थमनर्थं वा प्रकाशयति नो महान् ॥ ११ ॥
अशक्तस्तु भवेत्साधुर्ब्रह्मचारी च निर्धनः ।
व्याधितो देवभक्तश्च **वृद्धा नारी पतिव्रता** ॥ १२ ॥
आर्ता देवान्नमस्यन्ति तपः कुर्वन्ति रोगिणः ।
निर्धना दानमिच्छन्ति **वृद्धा नारी पतिव्रता** ॥ १३ ॥
आदौ वेश्या पुनर्दासी पश्चाद्भवति कुट्टिनी ।
सर्वोपायपरिक्षीणा **वृद्धा नारी पतिव्रता** ॥ १४ ॥
विषं कुपठिता विद्या विषं व्याधिरनौषधः ।
विषं व्याधिर्दरिद्रस्य **वृद्धस्य तरुणी विषम्** ॥ १५ ॥

नारीणां नायकं नेत्रं वेश्यानां नायकं धनम् ।
विप्राणां नायकं विद्या **वृन्ताकं शाकनायकम्** ॥ १६ ॥

**वृन्ताकं कोमलं पथ्यं** कूष्माण्डं कोमलं विषम् ।
आर्द्रकं च सदा पथ्यमपथ्यं वदरीफलम् ॥ १७ ॥

करारविन्देन पदारविन्दं मुखारविन्दे विनिवेशयन्तम् ।
**वटस्य पत्रस्य पुटे शयानं बालं मुकुन्दं मनसा स्मरामि** १८

यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणि ।
तृतीयमुत्तरीयार्थे **वस्त्राभावे चतुर्थकम्** ॥ १९ ॥

शर्मान्तं ब्राह्मणस्योक्तं **वर्मान्तं क्षत्रियस्य तु** ।
गुप्तान्तं चैव वैश्यस्य दासान्तं शूद्रजन्मनः ॥ २० ॥

वैशेष्यात्प्रकृतिश्रैष्ठ्यान्नियमस्य च धारणात् ।
संस्कारस्य विशेषाच्च **वर्णानां ब्राह्मणः प्रभुः** ॥ २१ ॥

तिमिरारिस्तमो हन्ति शङ्कातङ्कितमानसाः ।
**वयं काका वयं काका इति जल्पन्ति वायसाः** ॥ २२ ॥

ब्रह्मस्थाने कृतं पापं विष्णुस्थानेषु मुच्यते ।
विष्णुस्थाने कृतं पापं शिवस्थानेषु मुच्यते ॥
शिवस्थाने कृतं पापं गुरुस्थानेषु मुच्यते ।
गुरुस्थाने कृतं पापं **वज्रलेपो भविष्यति** ॥ २३ ॥

देशाटनं पण्डितमित्रता च **वाराङ्गनाराजसभाप्रवेशः** ।
अनेकशास्त्राणि विलोकितानि चातुर्यमूलानि भवन्ति पञ्च ॥ २४ ॥

किं वाससैवं न विचारणीयं **वासः प्रधानं खलु योग्यतायाः** ।
पीताम्बरं वीक्ष्य ददौ तनूजां दिगम्बरं वीक्ष्य विषं समुद्रः ॥ २५ ॥

मार्गे मार्गे निर्मलं ब्रह्मवृन्दं वृन्दे वृन्दे तत्त्वचिन्तानुवादः ।
**वादे वादे जायते तत्त्वबोधो** बोधे बोधे भासते चन्द्रचूडः ॥ २६ ॥

केयूरा न विभूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वला
न स्नानं न विलेपनं न कुसुमं नालंकृता मूर्धजाः ।
वाण्येका समलंकरोति पुरुषं या संस्कृता धार्यते
क्षीयन्ते खलु भूषणानि सततं **वाग्भूषणं भूषणम्** ॥ २७ ॥

दुर्जनस्य विशिष्टत्वं परोपद्रवकारणम् ।
**व्याघ्रस्य चोपवासेन पारणं पशुमारणम्** ॥ २८ ॥

कान्तारे घनतिमिरे भुजङ्गमेभ्यो
नो भीता नच गणिता महापगापि ।
किं बाले वहसि भयं मदङ्गसङ्गात्
**विक्रीते करिणि किमङ्कुशे विवादः** ॥ २९ ॥

सौमित्रिर्वदति विभीषणाय लङ्कां
देहि त्वं भुवनपते विनैव कोशम् ।
एतस्मिन् रघुपतिराह वाक्यमेतत्
**विक्रीते करिणि किमङ्कुशे विवादः** ॥ ३० ॥

संपीतेऽधरमधुनि स्तने गृहीते
संजाते गतवसने तथोरुयुग्मे ।
किं नीवीगतमबले रुणत्सि पाणिं
**विक्रीते करिणि किमङ्कुशे विवादः** ॥ ३१ ॥

न भूतपूर्वं न कदापि वार्ता हेम्नः कुरङ्गो न कदापि दृष्टः ।
तथापि तृष्णा रघुनन्दनस्य **विनाशकाले विपरीतबुद्धिः** ॥३२॥

हरिः फरी वृश्चिकवेणुरम्भा विनाशकाले फलमुद्वहन्ति ।
यथा तथा सज्जनदुर्जनानां **विनाशकाले विपरीतबुद्धिः** ॥३३॥

विप्रास्मिन्नगरे महान्कथयतां तालद्रुमाणां गणः
को दाता रजको ददाति वसनं प्रातर्गृहीत्वा निशि ।
को दक्षः परदारवित्तहरणे सर्वोपि दक्षो जनः
कस्माज्जीवसि हे सखे **विषकृमिन्यायेन जीवाम्यहम्** ३४

**विषादप्यमृतं** ग्राह्यममेध्यादपि कांचनम् ।
नीचादप्युत्तमां विद्यां स्त्रीरत्नं दुष्कुलादपि ॥ ३५ ॥

परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम् ।
वर्जयेत्तादृशं मित्रं **विषकुम्भं पयोमुखम्** ॥ ३६ ॥

अनर्घमपि माणिक्यं हेमाश्रयमपेक्षते ।
**विनाश्रयं न शोभन्ते पण्डिता वनिता लताः** ॥३७॥

विद्वत्त्वं च नृपत्वं च नैव तुल्यं कदाचन ।
[1]स्वदेशे पूज्यते राजा **विद्वान् सर्वत्र पूज्यते** ॥ ३८ ॥

**विद्वानेव विजानाति विद्वज्जनपरिश्रमम् ।**
नहि वन्ध्या विजानाति गुर्वीप्रसववेदनाम् ॥ ३९ ॥

**विभवाः सर्वतः पूज्या** न शरीराणि देहिनाम् ।
चाण्डालोऽपि नरश्रेष्ठो यस्यास्ति विपुलं धनम् ॥ ४० ॥

उषःकालश्च गर्गश्च शकुनं च बृहस्पतिः ।
अङ्गिराश्च मनोत्साहो **विप्रवाक्यं जनार्दनः** ॥ ४१ ॥

नदीनां च नखीनां शृङ्गिणां शस्त्रपाणिनाम् ।
**विश्वासो नैव कर्तव्यः स्त्रीषु राजकुलेषु च** ॥४२॥

समुपागतवति नाथे गेहे कृष्णे करोमि किं त्वद्य ।
स्मर सखि पाणिनिसूत्रं **विप्रतिषेधे परं कार्यम्** ॥ ४३ ॥

सद्भावो नास्ति वेश्यानां स्थिरता नास्ति सम्पदाम् ।
विवेको नास्ति मूर्खाणां **विनाशो नास्ति कर्मणाम्** ॥४४॥

अनार्येण कृतघ्नेन संगतिर्मे न युज्यते ।
**विनाशमपि काङ्क्षन्ति ज्ञातीनां ज्ञातयः सदा** ॥४५॥

ब्रह्महत्यादिपापानां कथंचिन्निष्कृतिर्भवेत् ।
**विश्वासघातकानां तु निष्कृतिर्नास्ति कुत्रचित्** ॥४६॥

वीणेव श्रोत्रहीनस्य लोलाक्षीव विचक्षुषः ।
व्यसोः कुसुममालेव **विद्या स्तब्धस्य निष्फला** ॥ ४७ ॥

[2]धनंजये हाटक[3]संपरीक्षा महारणे शस्त्रभृतां परीक्षा ।
विपत्तिकाले गृहिणीपरीक्षा **विद्यावतां भागवते परीक्षा** ॥४८॥

व्यसनानि सन्ति बहुशो व्यसनद्वयमेव केवलं व्यसनम् ।
**विद्याभ्यसनं व्यसनं ह्यथवा हरिपादसेवनं व्यसनम्** ॥४९॥

विवाहो जन्म मरणं यदा यत्र च येन च ।
**त्रयः कालकृताः पाशाः शक्यन्ते न निवर्तितुम्** ५०

दृष्टिं देहि पुनर्बाले कमलायतलोचने ।

---

१ ( नृपत्वं क्षीयते सद्यो विद्वत्त्वं न कदाचन ). २ अग्निः. ३ सुवर्ण.

श्रूयते हि पुरा लोके **विषस्य विषमौषधम्** ॥ ५१ ॥
**वेषं न विश्वसेत्प्राज्ञो** वेषो दोषाय जायते ।
रावणो भिक्षुरूपेण जहार जनकात्मजाम् ॥ ५२ ॥
**वैद्यराज नमस्तुभ्यं यमराजसहोदर ।**
यमस्तु हरते प्राणान्वैद्यः प्राणान्धनानि च ॥ ५३ ॥
**वैद्यानां शारदी माता पिता च कुसुमाकरः ।**
यमदंष्ट्रा स्वसा प्रोक्ता हितभुञ्जितभुग्रिपुः ॥ ५४ ॥

## श

स्वहस्तग्रथिता माला स्वयं घृष्टं च चन्दनम् ।
स्वहस्तलिखितं स्तोत्रं **शक्रस्यापि श्रियं हरेत्** ॥ १ ॥
नापितस्य गृहे क्षौरं पाषाणे गन्धलेपनम् ।
आत्मरूपं जले दृष्टं **शक्रस्यापि श्रियं हरेत्** ॥ २ ॥
अजारजः खररजस्तथा संमार्जनीरजः ।
दीपखट्वकयोश्छाया **शक्रस्यापि श्रियं हरेत्** ॥ ३ ॥
दिवा कपित्थच्छाया च रात्रावश्वत्थमेव च ।
दीपखट्वा नरच्छाया **शक्रस्यापि श्रियं हरेत्** ॥ ४ ॥
परान्नं परवस्त्रं च परशय्याः परस्त्रियः ।
परवेश्मनि वासश्च **शक्रस्यापि श्रियं हरेत्** ॥ ५ ॥
**शनैः पन्थाः शनैः कन्थाः** शनैः पर्वतलङ्घनम् ।
शनैर्विद्या शनैर्वित्तं पञ्चैतानि शनैः शनैः ॥ ६ ॥
अस्थिवद्दधिवच्चैव कुष्ठवत्पिष्टवत्तथा ।
राजंस्तव यशो भाति **शरच्चन्द्रमरीचिवत्**[1] ॥ ७ ॥
**शत्रोरपि गुणा वाच्या** दोषा वाच्या गुरोरपि ।
सर्वदा सर्वयत्नेन पुत्रे शिष्यवदाचरेत् ॥ ८ ॥
कृते प्रतिकृतिं कुर्याद्धिंसने प्रतिहिंसितम् ।
तत्र दोषं न पश्यामि **शठे शाठ्यं समाचरेत्** ॥ ९ ॥
**शठं प्रति शठं** ब्रूयादादरं प्रति चादरम् ।

---

१. इयं कालिदासोक्तिः, मूलं तु ( वृद्धब्राह्मणशप्पवत् ) इति.

[1]तत्र दोषो न भवति दुष्टे दुष्टं समाचरेत् ॥ १० ॥
**शतं विहाय भोक्तव्यं** सहस्रं स्नानमाचरेत् ।
लक्षं विहाय दातव्यं कोटिं त्यक्त्वा हरिं भजेत् ॥ ११ ॥
**स्मशानान्ते पुराणान्ते मैथुनान्ते च या मतिः ।**
सा मतिः सर्वदा चेत्स्यात्को न मुच्येत बन्धनात् ॥ १२ ॥
**श्वशुरगृहनिवासः स्वर्गतुल्यो नराणां**
यदि भवति विवेकी पञ्च वा षड् दिनानि ।
[2]दधिमधुघृतलोभान्मासमेकं वसेच्चे-
द्भवति विगतलज्जो मानवो मानहीनः ॥ १३ ॥
**श्रद्धया दीयते यस्माच्छ्राद्धं तेन निगद्यते ।**
पितॄनुद्दिश्य विप्रेभ्यो दत्तं श्राद्धमुदाहृतम् ॥ १४ ॥
प्रातःस्नानं गवां सेवा आरामः पुष्पवाटिका ।
मातापित्रोश्च शुश्रूषा **शास्त्राय च सुखाय च** ॥ १५ ॥
दुर्मन्त्री राज्यनाशाय ग्रामनाशाय कुञ्जरः ।
**शालको गृहनाशाय** सर्वनाशाय मातुलः ॥ १६ ॥
**शालको गृहनाशाय** वित्तनाशाय कुञ्जरः ।
महिषी तोयनाशाय सर्वनाशाय मूषकः ॥ १७ ॥
अग्रतश्चतुरो वेदाः पृष्ठतः सशरं धनुः ।
इदं ब्राह्ममिदं क्षात्रं **शापादपि शरादपि** ॥ १८ ॥
क्रोध एव महान् शत्रुस्तृष्णा वैतरणी नदी ।
संतोषो नन्दनवनं **शान्तिरेव हि कामधुक्** ॥ १९ ॥
दिल्लीश्वरो वा जगदीश्वरो वा मनोरथान् पूरयितुं समर्थः ।
अन्येन केनापि नृपेण दत्तं **शाकाय वा स्याल्लवणाय वा स्यात्** २०
निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
**शारीरं केवलं कर्म** कुर्वन्नाप्नोति किल्बिषम् ॥ २१ ॥
गुरुरात्मवतां शास्ता राजा शास्ता दुरात्मनाम् ।

---

१ ( त्वया मे लुञ्चिताः केशा मया च शिरमुण्डनम् ). २ (दधिमधुघृत-लोपो मासमेकं वसेच्चेत्तदुपरि दिनमेकं पादरक्षाप्रयोगः ).

अथ प्रच्छन्नपापानां **शास्ता वैवस्वतो यमः** ॥ २२ ॥
यः स्वभावो हि यस्यास्ते स नित्यं दुरतिक्रमः ।
**श्वा यदि क्रियते राजा स किं नाश्नात्युपानहम्** २३
न कालनियमोऽथवा ऋणधनादिसंरोधनं
न भूतिपरिशुद्धिरप्यथ न चात्र दिग्बन्धनम् ।
न चाङ्गकरमातृकान्यसनवायुसंशोधनं
**शिवाय गुरवे नमः** परममन्त्रसम्राडयम् ॥ २४ ॥
शिवाय विष्णुरूपाय शिवरूपाय विष्णवे ।
**शिवस्य हृदयं विष्णुर्विष्णोश्च हृदयं शिवः** ॥ २५ ॥
सद्भिस्तु लीलया प्रोक्तं **शिलालिखितमक्षरम्** ।
असद्भिः शपथेनापि जले लिखितमक्षरम् ॥ २६ ॥
राज्ञश्चामात्यजा दोषाः पत्नीदोषास्तु भर्तरि ।
तथा **शिष्यार्जितं पापं गुरुः प्राप्नोति निश्चितम्** ॥२७॥
**शिक्षापतनजृम्भासु जीवोत्तिष्ठाङ्गुलिध्वनिम्** ।
कुर्वञ्छ्रेयो ह्यवाप्नोति अकृते ब्रह्महा भवेत् ॥ २८ ॥
आपदर्थं धनं रक्षेत् **श्रीमतामापदः कुतः** ।
सा चेदपगता लक्ष्मीः संचितार्थोपि नश्यति ॥ २९ ॥
**शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते** ।
अथवा योगिनामेव कुले भवति धीमताम् ॥ ३० ॥
**शुभं ब्रूयात्प्रियं ब्रूयाद्भद्रमित्येव वा वदेत्** ।
शुष्कवैरं विवादं च न कुर्यात्केनचित्सह ॥ ३१ ॥
**शुभं ब्रूयाच्छुभं ध्यायेच्छुभमिच्छेच्च शाश्वतम्** ।
जन्तूनामुपकाराय कुर्याद्देहादिचालनम् ॥ ३२ ॥
संध्यामुपासते विप्रा नित्यमेव द्विजोत्तमाः ।
**शुचिर्वाप्यशुचिर्वापि संध्या काले विधीयते** ॥३३॥
सर्वेषां ब्राह्मणानां तु त्रिषु कालेष्वयं विधिः ।
**शुचिर्वाप्यशुचिर्वापि संध्या काले विधीयते** ॥३४॥
**श्रुतिस्मृती उभे नेत्रे द्विजस्य परिकीर्तिते** ।

---

१ शिष्यापराधे गुरोर्दण्डः.

विपद्युच्चैः स्थेयं पदमनुविधेयं च महतां
**सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम्** ॥ २२ ॥

अप्राप्तयौवना नारी न कामाय न शान्तये ।
**सम्प्राप्ते षोडशे वर्षे गर्दभी चाप्सरायते** ॥ २३ ॥

अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
**संभावितस्य चाकीर्तिर्मरणादतिरिच्यते** ॥ २४ ॥

स राघवेन्द्रो हृतराजदारः स वानरेन्द्रो हृतराजदारः ।
एवं तयोरध्वनि दैवयोगात् **समानशीलव्यसनेषु सख्यम्**॥२५॥

मृगा मृगैः सङ्गमनुव्रजन्ति गावश्च गोभिस्तुरगास्तुरङ्गैः ।
मूर्खाश्च मूर्खैः सुधियः सुधीभिः **समानशीलव्यसनेषु सख्यम्** २६

सर्वौषधीनाममृतं प्रधानं सर्वेषु सौख्येष्वशनं प्रधानम् ।
सर्वेन्द्रियाणां नयनं प्रधानं **सर्वेषु गात्रेषु शिरः प्रधानम्** ॥२७॥

यथा विहङ्गास्तरुमाश्रयन्ति नद्यो यथा सागरमाश्रयन्ति ।
यथा तरुण्यः श्रियमाश्रयन्ति **सर्वे गुणाः काञ्चनमाश्रयन्ति** २८

यस्यास्ति वित्तं स नरः कुलीनः स पण्डितः स श्रुतवान् गुणज्ञः ।
स एव वक्ता स च दर्शनीयः **सर्वे गुणाः काञ्चनमाश्रयन्ति** २९

शय्या वस्त्रं चन्दनं चारुहास्यं वीणा वाणी दृश्यते या च नारी ।
न भ्राजन्ते क्षुत्पिपासातुराणां **सर्वारम्भास्तन्दुलप्रस्थमूलाः** ३०

सद्वंशजातं गुणकोटिनम्रं धनुः कथं पार्थिववामहस्ते ।
शरः परप्राणविहारदक्षः **सपक्षपातोप्यधमो गरीयान्** ॥ ३१ ॥

वनानि दहते वह्निर्वनमूलानि रक्षति ।
ब्राह्मणक्षोभितो वह्निः **समूलं च विनश्यति** ॥ ३२ ॥

अन्यायोपार्जितं द्रव्यं दशवर्षाणि तिष्ठति ।
प्राप्ते चैकादशे वर्षे **समूलं च विनश्यति** ॥ ३३ ॥

पिपीलिकार्जितं धान्यं मक्षिकासंचितं मधु ।
लुब्धेन संचितं द्रव्यं **समूलं च विनश्यति** ॥ ३४ ॥

पुत्र इत्येव पितरि कन्यकेत्येव मातरि ।
इत्येवं वदतः पुंसः **सर्वत्र विजयो भवेत्** ॥ ३५ ॥

अश्रद्दधानश्च संशयात्मा विनश्यति ।
लोकोस्ति न परो न सुखं संशयात्मनः ॥ ३६ ॥
ेन प्रकारेण यस्यकस्यापि देहिनः ।
पं जनयेत्प्राज्ञस्तद्देवेश्वरपूजनम् ॥ ३७ ॥
य..। च ब्रह्मचारी च सदावद्धश्च घोटकः ।
अंतःपुररमण्यश्च सदा मैथुनचिन्तकाः ॥ ३८ ॥
तक्षकस्य विषं दन्ते मक्षिकायाश्च मस्तके ।
वृश्चिकस्य विषं पुच्छे सर्वाङ्गे दुर्जनस्य तत् ॥ ३९ ॥
सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ ४० ॥
चतुरः सखि मे भर्ता यल्लिखति च तत्परो न वाचयति ।
तस्मादप्यधिको मे स्वयमपि लिखितं स्वयं न वाचयति ४१
तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे ।
नगरग्रामदाहे च स्पृष्टास्पृष्टिर्न दुष्यति ॥ ४२ ॥
सद्यःप्रज्ञाहरा तुण्डी सद्यःप्रज्ञाकरी वचा ।
सद्यःशक्तिहरा नारी सद्यःशुक्रकरं पयः ॥ ४३ ॥
समदुःखसुखः स्वस्थः समलोष्ठाश्मकांचनः ।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥ ४४ ॥
दीपाग्निं दीपतैलं च सकेशां विधवां तथा ।
प्रेताग्निं च तथा स्पृष्ट्वा सचैलं स्नानमाचरेत् ॥ ४५ ॥
सर्वत्र जयमन्विच्छेत्पुत्रादिच्छेत्पराजयम् ।
वासुदेवं नमस्यन्ति वसुदेवं न ते जनाः ॥ ४६ ॥
सर्वदा स्वहितमाचरणीयं किं करिष्यति जनो वहुजल्पः ।
सर्वलोकपरितोषकारको नास्ति तत्र खलु कश्चिदुपायः ॥ ४७ ॥
मा मां स्पर्शय पुष्पवत्यहमहो पुष्पेण किं पातकं
पुष्पिण्या सह संगमेन पुरुषस्यार्धायुषं क्षीयते ।
अस्पृष्ट्वा सकलायुषं क्षयति चेत्तस्यार्धनाशो वरः
सर्वस्यापि विनाशकालसमये अर्धं त्यजेत्पण्डितः ४८

**सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति पण्डितः।**
अर्धेन कुरुते कार्यं सर्वनाशो न जायते ॥ ४९ ॥

सहते शरशतपातानाजानेयः कशां न वा सहते।
**सहते विपत्सहस्रं** मानी[1] नैवापमानलेशमपि ॥ ५० ॥

**सहपरिजनेन विलसति धीरो गहनानि तरति पुनरेकः**
विषमेकेन निपीतं त्रिपुरजिता सह सुरैरमृतम् ॥ ५१ ॥

यो न यानं न पर्यङ्कं न पीठं न गजं रथम्।
आरोहेत्संमतोऽस्मीति **स राजवसतिं वसेत्** ॥ ५२ ॥

अथ यत्रैवमासीनं शंकरं दुष्टचारिणः।
न तत्रोपविशेद्यो वै **स राजवसतिं वसेत्** ॥ ५३ ॥

नास्यानिष्टानि सेवेत नाहितैः सह संवसेत्।
स्वस्थानान्न विकम्पेत **स राजवसतिं वसेत्** ॥ ५४ ॥

लाभेन हर्षयेद्यस्तु न व्यथेद्योऽवमानितः।
असंमूढश्च यो नित्यं **स राजवसतिं वसेत्** ॥ ५५ ॥

अम्लानो बलवाञ्शूरश्छायेवानुगतः सदा।
सत्यवादी मृदुर्दान्तः **स राजवसतिं वसेत्** ॥ ५६ ॥

अन्यस्मिन्प्रेष्यमाणे तु पुरस्ताद्यः समुत्पतेत्।
अहं किं करवाणीति **स राजवसतिं वसेत्** ॥ ५७ ॥

आन्तरे चैव बाह्ये च राज्ञा यश्चैव सर्वदा।
आदिष्टो नैव कम्पेत **स राजवसतिं वसेत्** ॥ ५८ ॥

यो वै गृहेभ्यः प्रवसन् प्रियाणां नानुसंस्मरेत्।
दुःखेन सुखमन्विच्छेत् **स राजवसतिं वसेत्** ॥ ५९ ॥

**समयाचारिको धर्मो** जातिदेशकुलोद्भवः।
ग्रामाचारः परिग्राह्यस्तत्रतत्र यथोदितः ॥ ६० ॥

यदभावि न तद्भावि भावि चेन्न तदन्यथा।
इति निश्चित्य सततं **सर्वं त्यक्त्वा हरिं भजेत्** ॥ ६१ ॥

---

१ अवमानं न सहते मानी.

सर्वं परवशे दुःखं सर्वमात्मवशे सुखम् ।
एतद्विद्यात्समासेन लक्षणं सुखदुःखयोः ॥ ६२ ॥

चेतोहरा युवतयः सुहृदोऽनुकूलाः
सद्बान्धवाः प्रणतिनम्रगिरश्च भृत्याः ।
वल्गन्ति दन्तिनिवहास्तरलास्तुरङ्गाः
संमीलने नयनयोर्नहि किंचिदस्ति ॥ ६३ ॥

अश्वारूढं यतिं दृष्ट्वा खट्वारूढां रजस्वलाम् ।
सकेशां विधवां दृष्ट्वा सचैलं स्नानमाचरेत् ॥ ६४ ॥

नौकायां शत्रुसंबाधे कोटमध्ये महान्धसे ।
स्पर्शास्पर्शे न दोषोऽस्ति न तथा यज्ञमण्डपे ॥ ६५ ॥

कुण्डे काष्ठे रथे मञ्चे नौकायां पशुवृक्षयोः ।
तृणौघजनसंघाते स्पर्शदोषो न विद्यते ॥ ६६ ॥

न स्वामी भृत्यतः स्वाम्यमिच्छन् यो राति चाशिषः ।
स वै स्वामी स वै भृत्यो गुणलुब्धौ न कामुकौ ६७

सभा जिता वस्त्रवता मिष्टाशा गोमता जिता ।
अध्वा जितो यानवता सर्वं शीलवता[1] जितम् ॥ ६८ ॥

यत्र यत्र हरेरर्चा स देशः श्रेयसां पदम् ।
स वै पुण्यतमो देशः सत्पात्रं[2] यत्र लभ्यते ॥ ६९ ॥

प्राज्ञो वा यदि वा मूर्खः सधनो निर्धनोपि वा ।
सर्वे कालवशं यान्ति शुभाशुभसमन्विताः ॥ ७० ॥

सङ्गः सर्वात्मना त्याज्यः स चेत्त्यक्तुं न शक्यते ।
स सद्भिः सह कर्तव्यः सन्तः सर्वस्य भेषजम् ॥ ७१ ॥

क्षुधितस्तृषितः कामी विद्यार्थी बहुपोषकः ।
भाण्डारी रक्षकश्चैव सप्त सुप्तान्प्रबोधयेत् ॥ ७२ ॥

सहवासी विजानाति सहवासिविचेष्टितम् ।
बकं किं वर्ण्यसे राम येनाहं निष्कुलीकृतः ॥ ७३ ॥

---

१ बुद्धिमता. २ किंचिद्वेदमयं पात्रं किंचित्पात्रं तपोमयम् ।
पात्राणामुत्तमं पात्रं शूद्रान्नं यस्य नोदरे ॥

श्रीः ।

# लघुधातुरूपसंग्रहः ।



वदायूँनगरसंस्थापित-संस्कृतपाठशालाया
मुख्याध्यापकेन साङ्गवेदविदा
झोपाख्यपण्डित-श्रीदेवानन्दशर्मणा
संकलितः
तदीयगुरुवरझोपाख्यपण्डितश्रीमुकुन्दशर्मणा
टिप्पण्यादिभिः सुसंस्कृतश्च ।



सचायं
मुम्बय्यां
तुकाराम जावजी
इत्येतैः निर्णयसागराख्ये स्वीयेऽङ्कनालये
मुद्रयित्वा प्राकाश्यं नीतः ।



संवत् १९७०, सन १९१४.



मूल्यं ३ आणकाः

# भूमिका ।



अयं ग्रन्थोऽस्मत्प्रियशिष्येण दरभङ्गामण्डलान्तर्गत रमौलीग्रामवास्तव्य श्रीमद्रुद्रमणिशर्मतनुजन्मना श्रीदेवानन्दशर्मणा लघुसिद्धान्तकौमुदीस्थनिखिलधातुरूपाणि सविशेषं सुस्पष्टं धात्वर्थादिविवेचनपुरःसरमात्मनोऽवबोधाय रसरत्नवसुभूमि( १८९६ )मितेसवीयवर्षे सङ्ग्रहीतुमुपक्रान्तोऽस्माकमपि दृग्गोचरोऽकारि । अस्माभिश्च समवलोक्योपयुक्तैरितरांशैः संपूर्यायं पिपठिषुजनानामतीवोपयोगितामापादितः। सोऽयमद्यास्माभिरेव मुम्बापुरनिवासिभ्यः श्रीलश्रीतुकारामजावजीति शुभाभिधेभ्यः ससर्वाधिकारं मुद्रापयितुमर्पितो दिदृक्षुजनमनस्तोषाय। तत्राद्यः परिच्छेदोऽधुना मुद्राप्य प्रकाशितोऽस्ति । यदीमं सादरं संगृह्यानुगृह्णीयुर्ग्राहकमहोदयास्तदास्यावशिष्टोऽपि भागो झटित्येव मुद्रणमाप्स्यत इति बाढं समाशास्महे—ऽतस्त्वर्यतामस्य संग्रहाय प्रबुभुत्सुभिः पिपठिषुभिरिति निगदति—

दरभङ्गामण्डलान्तर्गतहाटीतप्पान्तर्गतहरिपुरग्रामनिवासी-नन्दलालशर्मतनुजन्मा,

**पं० श्रीमुकुन्दशर्मा.**

श्रीः ।

# लघुधातुरूपसंग्रहः ।



श्रीमद्गुरुचरणाम्भोरुहमनिशं हृदि विचिन्त्य कुर्वेहम् ।
लघुसिद्धान्तस्थानां धातूनां रूपसंग्रहं स्वमुदे ॥ १ ॥
अत्र विशेषं किंचिद्ब्रुवे सुखं यच्च धारयन्स्वजनः ।
धातुप्रयोगभेदे नो मुह्येत्तेन मत्कृतिः फलिता ॥२॥

( धातुस्वरूपमाह )

क्रियाविशिष्टा या शक्तिस्तद्विशिष्टोऽथ यो मतः ।
स धातुर्द्विविधो ज्ञेयः सनाद्यन्तो गणस्थितः ॥ ३ ॥

क्रियाविशिष्टशक्तिविशिष्टत्वं क्रियावाचकत्वम् । आद्यं वैशिष्ट्यं च स्वमुख्यविशेष्यताकबोधाऽनुकूलत्वसम्बन्धेन । अन्त्यं वैशिष्ट्यं च स्वपर्याप्त्यधिकरणत्व-स्वनिरूपकार्थविषयकबोधतात्पर्येणोच्चरितत्वोभयसंबन्धेन । तथाच दरिं द्रातीति दरिद्रेत्यादौ दरिकर्मकद्राणकर्त्रादितात्पर्यके दुर्गतित्वाद्यवच्छिन्नमुख्यविशेष्यताकबोधानुकूला या शक्तिस्तत्पर्याप्त्यधिकरणत्वेऽपि तन्निरूपकार्थविषयकबोधतात्पर्येणोच्चरितत्वाभावात् कुत्सितगमनमुख्यविशेष्यताकबोधानुकूलद्रापर्याप्तशक्तिनिरूपकार्थविषयकबोधतात्पर्येणोच्चरितत्वेऽपि तादृशशक्तिपर्याप्त्यधिकरणत्वाभावाच्च नातिव्याप्तिः । लिडा-

दौ तु आस्वादनमुख्यविशेष्यताकबोधानुकूला या शक्तिस्तत्पर्याप्त्यधिकरणत्वस्य तन्निरूपकास्वादनविषयको य आस्वादनकर्तृमुख्यविशेष्यताको बोधस्तत्तात्पर्येणोच्चरितत्वस्य च सत्वान्नाव्याप्तिरिति हृदयम् । सनाद्यन्त इति । "सनाद्यन्ता धातवः" "भूवादय" इति न्यासिनां केषांचिन्मतेनायंक्रम उपन्यस्तः ॥ ३ ॥

( सनाद्यन्तो यथा )

**सन्क्यच्काम्यच्क्यङ्क्यषोऽथाचारक्विप्णिज्यङौतथा**
**यगाय ईयङ् णिङ् चेति द्वादशामी सनादयः ॥ ४ ॥**

( अथ गणाः )

**भ्वाद्यदादिर्जुहोत्यादिर्दिवादिः स्वादिरेव च ।**
**तुदादिश्च रुधादिश्च तनक्र्यादिचुरादयः ॥ ५ ॥** इति,

**एषां लक्षणभेदांस्तत्तद्गण आदितो वक्ष्ये ।**
**बोधक्रमं च सुधियामवेक्षणीयं विशेषं च ॥ ६ ॥**

**आदौ धातुगतानामिद्विहतानामिहानुबन्धानाम् ।**
**वच्मि फलं किल सकलं मन्दधियामिद्धये बुद्धेः॥७॥**

इहास्मिँल्लघुधातुरूपसङ्ग्रहे आदौ प्रथमं धातुगतानां धातुर्घटकानामिता इत्संज्ञया विहतानां लुप्तानामित्संज्ञाप्रयोज्य-

---

१ घटकत्वं च विषयित्वसम्बन्धावच्छिन्नव्यापकत्वम् । ज्ञानं विषयि अर्थोहि विषयः यत्र ( ज्ञाने ) विषयितासंबन्धेन सानुबन्धो धातुरस्ति तत्र ( ज्ञाने ) विषयितासम्बन्धेनानुबन्धो नास्तीति वक्तुमशक्यत्वात्तदधिकरणवृत्त्यत्यन्ताभावाप्रतियोगित्वरूपतद्व्यापकत्वस्य तत्र सत्वाल्लक्षणसमन्वयः॥व्यापको हि व्याप्यत्वेनाभिमतस्याधिकरणे येन संबन्धेन वर्तते स ( सम्बन्धः ) व्यापकतावच्छेदकः । व्यापकता च तत्संबन्धावच्छिन्नेति बोध्यम् ॥

लोपवतामित्यर्थः । अनु फलमनुसन्धाय पश्चाद्बध्यन्ते घटकी-क्रियन्त इत्यनुबन्धा अनुदात्तादयो वक्ष्यमाणास्तेषां सकल-मेकैकं सर्वस्येति समस्तं फलं मन्दधियां शिक्ष्यमाणानां बा-लानां बुद्धेरिद्धये दीप्त्यर्थं वच्मि कथयामि ॥ ७ ॥

**अनुदात्तोऽथ ङकारो द्वावपि तनुतस्तङानयोर्योगम्।**
**कर्तृगतेऽथ फले द्वौ ञस्वरितौ चापि तत्कृतौ दृष्टौ ८**

अथ अनुदात्तोऽकारादिर्ङकारश्चेति द्वावपि तङानयो-र्योगं तनुतः विस्तारयतस्तद्योगप्रयोजका भवन्तीत्यर्थः । योग-श्च धातोः परत्रैव, प्रत्ययः परश्चेत्यनुशासनात् । यथा एध वृद्धौ एधते, एधमानः, शीङ् स्वप्ने, शेते, शयानः, अनुदात्तङित इत्यात्मनेपदम् । अथ द्वौ ञकारस्वरितौ चापि कर्तृगते फले क्रियाफलस्य कर्तृगामित्वविवक्षायां तत्कृतौ उक्तकार्यकृतौ दृष्टौ, तदविवक्षायां तु शेषात्कर्तरीति परस्मैपदमेव, यथा श्रिञ् सेवायाम्, श्रयति, श्रयन्, श्रयते, श्रयमाणः, यज देवपूजादौ यजति, यजन्, यजते, यजमानः । स्वरितञित इत्यात्मनेपदमन्यत्तूक्तम् ॥ ८ ॥

**निष्ठायां खलु भावेऽथादिकृतौ वेट्कृतां तनुते ।**
**आकारस्त्ववशिष्टेऽनिट्को निष्ठाभिधे दृष्टः ॥ ९ ॥**

अथ आकारस्तु निष्ठायां क्तक्तवत्वोर्विषये, भावे, आदिकृतावादिकर्मणि च, वा इट् यस्मात्तस्य भावस्तां वेट्-कृतां तनुते, विकल्पेट्प्रयोजको भवति, विभाषा भावादिकर्म-णोरितिसूत्रात्—यथा ञिमिदा स्नेहने, मिन्नमनेन, मेदितम-नेन, प्रमिन्नः, प्रमेदितः । अवशिष्टे निष्ठाभिधे अनिट्को

दृष्टः । यथा—मिन्नः, मिन्नवान्, आदितश्चेतीट्प्रतिषेधः ॥९॥

**इस्तु नुमं विदधानः क्तक्तवतोरीरनिट्कतां कुर्वन् ।**
**दृष्टो विधौ विकल्पं विदधत्क्त्वायामिटः शम्भुः ॥१०॥**

इस्तु इकारस्तु नुमं विदधानः दृष्टः, यथा टुनदि समृद्धौ नन्दति, नन्दन्, इदितोनुमिति नुम् । ईः ईकारः क्तक्तवतो-र्विषये अनिट्कतां कुर्वन् दृष्टः यथा—उन्दी क्लेदने उन्नः, उन्नवान्, श्वीदित इति नेट् । शम्भुरुकारः क्त्वायामिटः विधौ विकल्पं विदधत् दृष्टः यथा—दिवु क्रीडादौ, द्यूत्वा, देवित्वा, उदितोवेति वेट् ॥ १० ॥

**ऊकारोऽपि विकल्पं कर्तुमिटं चाश्रितो बहुशः ।**
**ऋस्तु विह्रस्वेऽङोर्थे लृश्च विकल्पेऽस्ति तस्यैवेर् ॥११॥**

ऊकारोऽपि बहुशः बहुषु धातुषु इटं विकल्पं कर्तुमा-श्रितः । यथा—गुपू रक्षणे जुगोपिथ, जुगोप्थ, स्वरतिसूतीति वेट् । ऋस्तु विह्रस्वे ह्रस्वाभावार्थे आश्रित इत्यनुषङ्गो यथासम्भ-वमुत्तरत्रापि, यथा लोकृ दर्शने, अलुलोकत् । नाग्लोपीति ह्रस्वनिषेधः, अङः अर्थे लृश्च यथा, गम्लृ गतौ, अगमत्, पुषादीत्यङ् । तस्यैवाङो विकल्पे इर् अस्ति, यथा णिजिर् शौचपोषणयोः, अनिजत्, अनैक्षीत् ॥ ११ ॥

**एकारस्सिचि वृद्धिं रुणद्धि निष्ठातकारस्य ।**
**ओकारस्तु विधाने नस्य सुखार्थं समाश्रितःकश्चित् १२**

एकारः सिचि परे वृद्धिं रुणद्धि । यथा—कटे वर्षा० अकटीत्, ओकारस्तु निष्ठातकारस्य स्थाने नस्य विधाने समा-श्रितः, यथा, भुजो कौटिल्ये, भुग्नः, भुग्नवान्, कश्चिदका-

रादिरतधात्वादिषु सुखार्थं सुखेनोच्चारणार्थं समाश्रितः॥१२॥

**क्तस्य विशेषविधाने ञिश्च विधानेऽथुचष्टुश्च ।**
**डुः क्रिविधौ किल षोऽङोणश्च विशेषानुसंधये कथितः**

ञिश्च क्तप्रत्ययस्यार्थविशेषे विधाने समाश्रितः। यथा—ञिमिदा स्नेहने मिन्नः। अत्र वर्त्तमान इत्यधिकृत्य ञीतः क्त इति वर्त्तमाने क्तः। टुश्चाऽथुचो विधाने समाश्रितः। यथा—टुवेपृ कम्पने वेपथुः, ट्वितोऽथुच्। डुः क्रिप्रत्ययस्य विधाने समाश्रितः। किल इति निश्चयेन, यथा डुपचष् पाके पक्त्रिमम्। ड्वितः क्त्रिः, क्त्रेर्मम्नित्यम्। षः अङः विधौ। यथा—जॄष् वयोहानौ, जरा, षिद्भिदादिभ्योऽङ् इत्यङ्। णश्च इणो यणित्यादौ गत्यर्थस्यैतेरेव ग्रहणं यथा स्यादिति विशेषस्यानुसंधानार्थं कथितः। पाणिनिनेति सर्वत्र कर्तृपदमध्याहार्यम्। चकारादिक् स्मरणे, इत्यत्र ककारः अधीगर्थेत्यत्र विशेषणार्थः, एवमन्यदपि यथार्थमुन्नेयम्[1] ॥ १३ ॥

**फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः ।**
**फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ॥ १४ ॥**

क्रियापदघटितवाक्यजन्यशाब्दबोधक्रमबोधनाय क्रियापदघटकपदानामर्थानाह फलेति। धातुः फलव्यापारयोरर्थयोः स्मृतः पूर्वाचार्यैरुक्त इत्यर्थः। उभयत्र धातोरेकनालावलम्बिफलद्वयन्यायेन खण्डशो विश्रान्ता एकैव शक्तिः। इत्थं च फ-

---

१ यथा ओहाक् त्यागे इत्यत्र ककारः हश्च व्रीहिकालयोरित्यत्र हाको हाङश्च ग्रहणार्थः ॥

लव्यापारोभयवाचकत्वं सर्वस्यापि धातोरिति सिद्धम्। एवं सति यत्रापि फलमात्रं धात्वर्थनिर्देशे निर्दिष्टं तत्र (तदनुकूलो) व्यापारोऽप्यनुसंधेय एव। तिङ आश्रये, फलाश्रये कर्मणि व्यापाराश्रये कर्तरि च स्मृताः। उक्तवदर्थः तुशब्दोऽप्यर्थे, तेन भावस्यापि सङ्ग्रहः। इति पदार्थमुक्त्वा वाक्यार्थमाह **फले इति**। प्रधानं प्राधन्यवान् निरूपितत्वं सप्तम्यर्थः प्राधान्यान्वयि, फलनिरूपितप्राधान्यवान्व्यापार इत्यर्थः। अनयोश्चानुकूलत्वं जन्यजनकभावापरपर्यायः सम्बन्धः तिङर्थः कर्तृ—कर्म—संख्या—कालाः। विशेषणम् यथायथमिति शेषः। तद्यथाकर्ता व्यापारे वृत्तित्वेन, कर्म निष्ठत्वेन फले, संख्या वैशिष्ट्यनियामकेन समवायेन कर्त्तरि, कालो व्यापारे वृत्तित्वेन। सकर्मकधातुसमभिव्याहारे कर्तुः कर्मणश्चोपादाने देवदत्तो हरिं भजतीत्यादौ देवदत्तादेरभेदेन प्रत्यार्थे कर्तरि। तथाच—देवदत्ताभिन्नैकत्वविशिष्टकर्तृवृत्तिर्हरिनिष्ठप्रीत्यनुकूलो वर्तमानकालवृत्तिर्व्यापार इत्यादिक्रमेण बोधः। द्विकर्मस्थले गां दोग्धि पयो गोप इत्यादौ च, पयोनिष्ठविभागानुकूलो यो गोनिष्ठो व्यापारस्तदनुकूलो, गोपाभिन्नैकत्वविशिष्टकर्तृवृत्तिर्वर्त्तमानकालवृत्तिर्व्यापार इत्यादिक्रमेण शाब्दबोधः। अकर्मकस्थले तु फलव्यापारयोरुभयोरपि कर्तुरेवान्वयः। परया कर्तृसंज्ञया बाधाच्च फलाश्रयत्वेऽपि न तस्य कर्मत्वं, इत्थं च देवदत्तोऽस्तीत्यादौ देवदत्तनिष्ठात्मधारणानुकूलो देवदत्ताभि-

---

१ संख्याकालावप्यर्थौ।

२ भावस्य चाख्याते प्राधान्यमेव "भावप्रधानमाख्यातम्" इति हि यास्कादिभिरुक्तम्।

न्नैकत्वविशिष्टकर्तृवृत्तिर्वर्तमानकालवृत्तिर्व्यापार इत्यादि क्रमेण बोधः ॥ चतुर्भिरुपाधिभिरपि धातोः क्रिया अकर्मिका भवति, तदुक्तम् ।

धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसङ्ग्रहात् ।

प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥ १ ॥ इति,

अत्र कर्मण इति उपसङ्ग्रहादिषु त्रिष्वन्वेति तथाचाद्ये, वहति भारमिति सकर्मकोऽपि वहतिर्नदीवहतीत्यादावकर्मकः। अत्र च स्यन्दने पूर्वत्र प्रापणे १ जीवति नृत्यति प्राणो गात्रमितिचोपसङ्गृहीतङ्कर्म २ मेघो वर्षति जलमिति प्रसिद्धं कर्म ३ हितान्न यः संशृणुते स किंप्रभुः । अत्र हितमित्यविवक्षितं कर्म ४ ॥ अर्थविशेषद्योतकोपसर्गबलेनाकर्मका अपि अर्थान्तरे सकर्मका यथा—मा माने तनौ ममुः, उदरं परिमाति; भवति, अनुभूयते आनन्दो देवदत्तेनेत्यादि । तदुक्तम्,

उपसर्गेण धात्वर्थो वलादन्यत्र नीयते ।

प्रहाराहारसंहारविहारपरिहारवत् ॥ १ ॥ इति ।

अधिकमन्यत्रानुसन्धेयम् ॥ १४ ॥

**नकारजावनुस्वारपञ्चमौ झलि धातुषु ।**

**सकारजश्शकारश्चे षाट्टवर्गस्तवर्गजः ॥ १५ ॥**

प्रतिज्ञातं विशेषं यथायथमुपयोक्ष्यमाणमवश्यानुसन्धेयं बालव्युत्पत्तय आह **नकारजाविति**। धातुषु झलि परतो विद्यमानौ अनुस्वारपञ्चमौ[1] नकाराज्जातौ चे चकारे

1 ङञणनमाः ।

परतो विद्यमानः शकारः सकाराज्जातः षाद्रेफषकारात्परतो विद्यमानष्टवर्गस्तवर्गाज्जातः इति तेन गवाक् भनक्ति तृप्यात् सुवृट् दन्भ्रन्ति तस्थौ इत्यादौ नलोपादिसिद्धिः॥१५॥

**फलव्यापारयोरेकनिष्ठतायामकर्मकः ।**
**धातुस्तयोर्धर्मिभेदे सकर्मक उदाहृतः ॥ १६ ॥**

सकर्मकाकर्मकभेदज्ञानोपायमाह—फलेति । एकनिष्ठतायामेकमात्रनिष्ठतायां भिन्नाधिकरणावृत्तितायामिति यावत् । धातुरकर्मकः न विद्यते कर्म यस्य तथाभूतः ( यथास्त्यादिः ) तयोः फलव्यापारयोर्धर्मिभेदे आश्रयभेदे सकर्मकः कर्मणासह वर्त्तते तथाभूतः ( यथा पच्यादिः ) उदाहृत उक्तः। धातुरिति पूर्वान्वयी । तथाच फलसमानाधिकरणव्यापारवाचकत्वमकर्मकत्वम् । फलव्यधिकरणव्यापारवाचकत्वं च सकर्मकत्वमिति फलितमिति सुधीभिराकलनीयम् ॥ १६ ॥

**धात्वर्थाश्चेहोक्ता ह्युपलक्षणतामितास्ततो भवतिः ।**
**उत्पत्तावित्येवं सम्भवतोऽन्येऽपि योगतः प्रादेः १७**

इहास्मिन् पाणिनीयधातुपाठे उक्ता धात्वर्था उपलक्षणताम् अविद्यमानत्वेऽपि व्यावर्त्तकतामन्यार्थोपक्षेपकतां वा इताः प्राप्तास्ततस्तस्मात्कारणात् भवतिः भूधातुः ( इक्श्तिपौ धातुनिर्देशे ) उत्पत्तौ प्रयुज्यत इति शेषः । यथा यागात्स्वर्गो भवति, उत्पद्यते इत्यर्थः, इत्येवं क्रमेण अन्येऽपि धातवः संभवतः यथासंभवं प्रादेर्वक्ष्यमाणशब्दसमुदायान्यतमस्य एकस्य द्वयोस्त्रयाणां चतुर्णां वा योगे अर्थान्तरे प्रयुज्यन्त इति शेषः ॥ १७ ॥

प्रपराऽपसमऽन्ववऽवनिस्निर्दुस् दुर्व्याङ् न्यधय एते
अप्यऽतिसूदभिप्रतिपर्युपानुगाः प्रादयः प्रोक्ताः १८

प्रादीनाह प्रपरेत्यादिना ॥ १८ ॥

उपसर्गा गतिसंज्ञाश्चामी एव क्रियायोगे ।
स्युर्द्योतयन्ति धातुष्वेव निलीनार्थमात्मयुतौ ॥ १९ ॥

अमी प्रादय एव क्रियायोगे ( क्रियावाचकभ्वादिधातुसमभिव्याहारे ) उपसर्गास्तत्संज्ञकाः[1] ( पाणिनिसङ्केतसम्बन्धेन तत्पदवन्तः ) गतिसंज्ञाश्च स्युः । उपसर्गाः क्रियायोगे, गतिश्चेति सूत्रस्वरसात् । अमी प्रादय आत्मनो युतौ योगे ( धातुभिरितिशेषः ) सत्यां धातुष्वेव निलीनमव्यक्तमर्थं द्योतयंति तथाच जन्यबोधविषयीभूतक्रियाविशेषविषयकतात्पर्यग्राहकत्वे सति प्राधन्यतमत्वमुपसर्गत्वम् । जन्यत्वं च प्रत्यासत्त्या यं प्रत्युपसर्गत्वं वक्तव्यं तन्निरूपितमेव, इत्थं च प्रतिगताः सेचका यस्मिन्स प्रतिसेचको ग्राम इत्यत्रोपसर्गात्सुनोतीत्यादिना न षः । प्रतिशब्दस्य गतिक्रियां प्रत्येव तत्रोपसर्गत्वात् एतत्फलितमेव "यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञे"-ति बोध्यम् ॥ १९ ॥

तं तं धातोः पूर्वं विशिष्टशिष्टैर्निरूप्यातः ।
शाब्दिकरूपैर्गदिताः स्वग्रन्थे द्योतकाः प्राद्याः ॥ २० ॥

अतः अस्मात्कारणात् शाब्दिकरूपैः प्रशस्तैः शाब्दिकैः ( अस्य उक्ता इत्यनेनान्वयः ) विशिष्टैरतिमहद्भिः शिष्टै-

---

१ उपगृह्याख्यातं तस्यैवार्थविशेषं सृजन्तीत्युपसर्गाः ।

रिष्टसाधनांशे भ्रमरहितैः सहेति शेषः ( अस्य निरूप्येत्यनेनान्वयः ) धातोः पूर्वे ( क्वचिद्व्यवहितं प्रायेणाव्यवहितं—ते प्राग्धातोः, व्यवहिताश्चेति सूत्रस्वरसात् ) तं तं वीप्सायां ( साकल्येन क्रियासम्बन्धरूपायां ) पदस्य द्विर्भावः, यथासम्भवं सर्वमप्युपसर्गजातं निरूप्य अर्थतोऽवधार्य ( निश्चित्य ) स्वग्रन्थे वाक्यपदीयादौ प्राद्या उक्तस्वरूपा द्योतका उक्ताः द्योतकत्वं च स्वसमभिव्याहृतपदनिष्ठवृत्त्युद्बोधकत्वं, क्वचित्क्रियाविशेषाक्षेपकत्वम् । यथा प्रादेशं विलिखतीत्यत्र विमाय लिखतीति विमानक्रियाक्षेपकः, क्वचित्सम्बन्धपरिच्छेदकत्वम् ।यथा कर्मप्रवचनीयानामन्वादीनामित्यन्यत्र व्यक्तम्, तेन अनुभूयते आनन्दश्चैत्रेण, उपास्यते गुरुः शिष्येणेत्यादिषु कर्मणि लकारसिद्धिरिति स्पष्टं तत्रैव ॥ २० ॥

**नैयायिकैस्तु युक्त्या वाचकता स्थापिता तेषु ।**
**पक्षद्वयेऽपि न क्षतिरस्मदभीष्टाऽभिधेयेषु ॥ २१ ॥**
**उपसर्गेणैकेन द्वाभ्यां त्रिभिरपि तथा धातुः ।**
**संयुज्यतेऽर्थसिद्ध्यै चतुर्भिरपि युज्यते कश्चित्॥२२॥**

धातुः भ्वादिशब्दस्वरूपमेकेनोपसर्गेणार्थसिद्ध्यै स्वार्थावबोधसिद्धये संयुज्यते यथा, तथा द्वाभ्यामुपसर्गाभ्यां त्रिभिरप्युपसर्गैः कश्चिद्विरल एव धातुश्चतुर्भिरपि युज्यते २२

**एकेन यथा विहरति युग्मेनाभ्यवहरत्यनलैः ।**
**समभ्यवहरति समभिव्याहरतीत्यब्धिसंख्यैश्च॥२३॥**

